श्रीः ।

महाकविपण्डितराजश्रीजगन्नाथविरचिता

# गङ्गालहरी ।

## पीयूषलहरीव्याख्यासहिता ।

द्वद्वरपणशीकरोपाह्वलक्ष्मणशर्मतनुजनुषा

वासुदेवशर्मणा

पाठान्तरादिभिः संस्कृता ।

सेयं

मुम्बय्यां

**पाण्डुरङ्ग जावजी**

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणालये

संमुद्य प्रकाशिता ।

शाकः १८५२, सन १९३०.



मूल्यं ६ आणकाः ।

# किंचित्प्रास्ताविकम् ।

अयि गीर्वाणवाणीरसिका वसुंधरागीर्वाणाः ! कर्णे कुरुतेमं लघुतरं प्रस्तावम् । भूयांसः खल्वत्र मानुषप्राणिनः समुत्पद्यन्ते स्वेस्वेऽवसरे तिरोभवन्ति च । येषां गणना दुःशक्या सहस्राक्षेणापीति न विरोहितं विदुषाम् । ते पुनर्मातृजठरान्निर्गता इत्येव संभूता इत्यभिधीयन्ते । एवंविधं जन्म तिरश्चामपि साधारणमिति कृत्वा किं तेन जननीयौवनकुठारायितेन जनुषा, किंतु स एव लोके संभूत इत्यभिधीयते संख्यावद्भिर्यस्य दशस्वपि दिक्षु धावल्येन विसृमरा कीर्तिः प्रसरति, यस्य चात्यन्तप्रणयिनीव वशंवदा भगवती सरस्वती, यश्च मोदयति सुधाधारानिर्विशेषेण मधुरेण स्वीयाचरणेन स्वान्तानि रसिकानाम् । विरलाः खल्वेवंविधा जनिमन्तो वसुधायां समुत्पद्यन्ते । समुत्पन्नेष्वपि विरला एव नाभिभूयन्ते सहसाऽहंकारेण । यमुद्दिश्यायमस्माभिः प्रस्ताव आरब्धः सोऽपि किल महाशयः प्रतिभटदन्तावलकेसरी पण्डितराजो जगन्नाथ एवंविधैरेवाखिलैर्गुणगणैरासीत्संपन्न इति तदैतिह्यं विबुधोद्धृतं यथाश्रुतं प्रस्तूयते—

पण्डितोत्तंसस्यैतस्य जननावसरो यद्यपि न शक्यते यथावन्निर्देष्टुं, तथापि दिल्लीपतिसमाश्रयणं नानाविधैः प्रमाणैर्निर्णीयमानं ज्ञापयत्यापाततोऽस्य स्थितिसमयम् । सोऽयं भामिनीविलासस्यान्तिमोल्लासे 'दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः' इति स्वयमेव प्रत्यपीपदत् । स च दिल्लीशः शहाजहान एवेति निश्चीयते । यतोऽयं आसफविलासकाव्ये शहाजहानमेवास्तोत् । शहाजहानस्तु शालिवाहनीयशकस्य षोडशशताब्द्या अपरार्धे अशीत्युत्तरपञ्चशतमिते १५८० शाके दिल्लीश्वरत्वमापन्नः सन् तस्यैव शकस्यावसाने कालवशं जगाम । तदवध्येवास्य यौवनारूढस्य दिल्लीनगरे संस्थितिरित्यपि सुवचम् ।

आसफविलासे तैलङ्गकुलावतंसेन जगन्नाथेनेति विन्यासादस्याभिजनस्तैलङ्गापरनामाऽऽन्ध्रदेश इति निश्चीयते। पिता चास्य पण्डितमण्डलीमण्डनायमानः पेरुभट्टो नाम प्रशंसनीयोऽध्यापक आसीत्। माता च महासाध्वी लक्ष्मीर्नाम। उभयोः सुकृतातिरेकादेवाखिलपण्डितपाण्डित्यगर्वसर्वंकषो जगन्नाथस्तनयः संवृत्तः। एतस्य हि तत्तद्रसपूरितेषु पठ्यमानेषु तेषु तेषु पद्येषु तत्तद्रसमयतामिवापद्यते चेतो रसिकानाम्। मुहुर्मुहुः पठितान्यप्येतस्य पद्यानि पठ्यमानानि नवं नवमेव कमप्यपूर्वं रसं वितरन्ति। पण्डितमूर्धन्यस्यास्य प्रज्ञाप्रकर्षलुब्धेन दिल्लीवल्लभेन शहाजहानबादशाहेन मनोविनोदास्पदा निजतनयास्मै प्रदत्ताऽतुलपारिबर्हविभवभवनादिदानेन सह। स च तया सहालभ्यान्विविधविषयभोगाननुभुञ्जन् स्वर्पतिरिव दिव्यान्भोगानहरहरनुसवनं प्रकामं जुषमाणश्चिरायारीरमत्।

अथैकदोढया यवन्या सह चरमे वयसि काश्यामुपगतः पण्डितरायस्तदा तत्रत्यैः सभ्यपण्डितैर्यवनकन्यापरिणेतृत्वादव्यवहार्योऽयमिति सतिरस्कारं सर्वत्रोदघोषि। पण्डितमण्डलकृताव्यवहार्यतावमानानाद्विषण्णान्तःकरणो जगन्नाथरायस्तान्प्रावोचत् 'यदि मां मत्प्रेयसीं चैनां तत्रभवन्तो भवन्तः पावयेयुर्नयेयुश्चाखिलैर्ब्राह्मणैः सह पङ्क्तिपावनत्वं तदा युष्मदादिष्टं प्रायश्चित्तमङ्गीकरिष्यामी'ति। तदपि प्रार्थनं विद्वत्तिरस्कृतमवगत्य, आस्तां किं मेऽवमानोद्युक्तैरेभिर्ब्राह्मणैस्तद्वितीर्णेन सामान्येनानेन प्रायश्चित्तेन वा, जगत्त्रयपावनी भगवती सुरतरङ्गिण्येव नूनं सभार्यं मां पावयिष्यतीति सनिश्चयमाचक्षाणः पण्डितराजो द्विपञ्चाशत्सोपानान्तरितभागीरथीप्रवाहं कमपि घट्टमूर्धानमधिष्ठाय सुललितपदबन्धनानि एकपञ्चाशत् पद्यानि प्रणीयापीपठत्। यान्येव सांप्रतं गङ्गालहरीति पीयूषलहरीति वा सन्ति

सुप्रसिद्धानि। उच्चार्यमाणेषु च तेषु प्रतिपद्यमेकैकं सोपानमारुह्यान्तिमपद्यावसाने कूलंकषात्वमुपागता भागीरथी तया यवन्या सह पण्डितराजं स्वपात्रान्तर्विलयं निन्ये। तदैनमवलोक्य महानुभावप्रभावं काशीस्थास्तदानींतनाः पण्डिता अत्यन्तं व्यस्मयन्तेति।

जगन्नाथपण्डितरायप्रणीतग्रन्थास्तु—(१) अमृतलहरी, (२) आसफविलासः, (३) करुणालहरी, (४) चित्रमीमांसाखण्डनम्, (५) जगदाभरणम्, (६) गङ्गालहरी, (७) प्राणाभरणम्, (८) भामिनीविलासः, (९) मनोरमाकुचमर्दनम्, (१०) यमुनावर्णनम्, (११) लक्ष्मीलहरी, (१२) सुधालहरी, (१३) रसगङ्गाधरश्चेत्येते दरीदृश्यन्ते। एतदन्येऽनुपलब्धाः स्युर्वा न वेति न विद्मो वयम्।

एतादृशानेकनिबन्धरत्नप्रणेतृ-परमपूज्य श्रीमत्पण्डितजगन्नाथरायसंबन्धिकिंवदन्त्यनुगुणं व्रीडावहं यवनीपरिणयादि यद्यप्यदर्श्यस्माभिस्तथापि तादृशकालुष्यनिर्बर्हणाय विद्वद्वर—अप्पाशास्त्री—राशिवडेकरमहाशयैः संस्कृतचन्द्रिकायां सुनिपुणं निर्णीतं तत्तथ्यातथ्यविवेचनं यथावदत्र प्रदर्श्यते—

स्वभावत एव किल क्रोधवन्तो यवनाः स्वाङ्गनासु परस्य प्रेममयं पूज्यभावसंभवमपि नयनपातं न सहन्ते किंपुनर्विधर्मीयस्य कामाविष्टमनस आत्मनः समक्षमेव निजकन्याविषयिणीं प्रार्थनाम्। यद्यपि भूयांसो विद्वांसो वैदुष्यस्याननुरूपमहंकारमवाप्नुवते तथापि नहि काममात्रासक्त्या धर्ममुल्लङ्घयितुमीहन्त इत्यपि नैव विस्मरणीयम्। क्षुद्रतमोऽपि यवनीं यदि विधर्मीयैः कृतया कान्तागतया कथयापि कोपस्य परां कोटिमारोहेत्तदा कथं वा निखिलभारतवर्षभूपालसमभ्यर्चितशासनो दिल्लीश्वरः शहाजहानः पण्डितेनापि जगन्नाथेनात्मनः समक्षमभ्यर्थितां कन्यां तस्मै प्रदाय यवनधर्मसंबधी-

रयितुं प्रभवेत्। नूनं नैतत्कथंचिदपि संभवति। 'यवनी नवनीतकोमलाङ्गी'त्यादयः श्लोका यदि पण्डितराजविरचिता एवेति स्वीक्रियेत तदा भामिनीविलासेऽपि तेषामुपनिबन्धनमवश्यमङ्गीकर्तव्यम्। दुर्वृत्ता जारजन्मानो हरिष्यन्तीति शङ्कया स्वीयपद्यरत्नानां भामिनीविलासाख्यां मञ्जूषां निर्मितवता पण्डितराजेन कथं वा तानि विस्मर्येरन् कथं च मञ्जूषायां न संगृह्येरन्नित्यपि विचारणीयं विद्वद्भिः। अतो नैतानि पद्यानि पण्डितराजप्रणीतानीति प्रतीयते। ततश्च जगन्नाथस्य यवनीपरिणयविषयिणीयमाख्यायिका गगन आलेखनमनुहरति। किंच सार्वभौमायमानो दिल्लीश्वरः सभायां जलं पिबेदित्यपि न श्रद्धेयम्। नापि वा तस्य कन्यका शिरसि कलशीं निधाय हीनभाग्या योषिदिव नीरमानयेदित्यपि संभवास्पदम्। येभ्यः पन्थानोऽपि भृत्यैरेवादिश्यन्ते तेषामसूर्यंपश्याः कन्यास्तत्र च सुस्तनीत्वादिविशेषणार्हाः प्रगल्भे वयसि पदमर्पयन्त्यः परपुरुषपरिवृत्तायां परिषदि पानीयमानयेयुरित्यपि विरुद्धमेव प्रतिभाति। अतो निर्मूलेयं जगन्नाथस्य यवनीपरिणेतृत्वविषयिण्याख्यायिका।

अथ भगवत्या भागीरथ्यात्मनोऽङ्केषु विलयं नीतो जगन्नाथ इत्येषापि किंवदन्ती कियत्सत्यभावमवलम्बत इति विचार्यते। ययैव पण्डितराजविरचितया स्तुत्या प्रमुदितहृदया देवनदी जगन्नाथं पावयामासेति श्रूयते सा किल पीयूषलहरी गङ्गालहरीति वा प्रथिता। यदि तूपरि निर्दिष्टा लोकवार्ता मृषात्वं नावगाहेत तदा गङ्गालहरीप्रणयनकाल एव जगन्नाथस्यायुषोऽवसानावसर इति स्फुटमेव। ततश्च गङ्गालहरीप्रणयनोत्तरं जगन्नाथो नान्यं प्रबन्धं निर्मास्यतीत्यपि सिद्धम्। अर्थाज्जगन्नाथविरचिते प्रबन्धान्तरे गङ्गालहरीगतानि पद्यानि नैव दृश्येरन्। किंतु तानि दृश्यन्ते। अतएव

गङ्गालहरीप्रणयनावसान एव जगन्नाथस्यायुषः परिसमाप्तिरिति वचनं नैव विचारसहम् । नापि गङ्गालहरीभिन्ना जगन्नाथविरचिता काचिदपि मन्दाकिन्याः स्तुतिरस्ति यस्या अवसानसमयं जगन्नाथस्य निधनावसरं मंस्यामहे । अतः सर्वथा निर्मूलेयमाख्यायिका । दृश्यन्ते च गङ्गालहरीगतानि पद्यानि रसगङ्गाधरे यथा—

विधत्तां निःशङ्कं निरवधि समाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः ।
कृतं प्रायश्चित्तैरलमथ तपोदानविभवैः
सवित्री कामानां यदि जगति जागर्ति भवति ॥

इति माधुर्योदाहरणम् ।

एवमनन्वयालङ्कारप्रकरणेऽपि—

कृतक्षुद्राघौघानथ सपदि संतप्तमनसः
समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः ।
अपि प्रायश्चित्तप्रसरणपथातीतचरितान्
नरानूरीकर्तुं त्वमिव जननि त्वं विजयसे ॥ इति ।

एवं भावस्योदाहरणप्रसङ्गेनोक्तं जगन्नाथेन तत्रैव 'मन्निर्मिताश्च पञ्च लहर्यो नाम पीयूषलहरी–सुधालहरी–लक्ष्मीलहरी–अमृतलहरी–करुणालहरी चेति । एवं च पीयूषलहर्यपराख्यायाः श्रीगङ्गालहर्याः पञ्चसु लहरीष्वन्तर्भूततया लहरीपञ्चकस्य च रसगङ्गाधर उल्लिखितत्वेन गङ्गालहरीगतानां पद्यानां रसगङ्गाधरे दृश्यमानत्वाच्च गङ्गालहर्या रसगङ्गाधरनिर्माणात्प्राक् संभूतत्वं स्फुटमेव प्रतीयते । ततश्च निर्मूलेयमाख्यायिका यदुच्यते लीनो मन्दाकिन्याक्रोडे जगन्नाथ इति ।

अथ द्वितीया किंवदन्ती । आसीत्किल दिल्लीपतेः कोऽपि पुरोहितो म्लेच्छजातीयो यः संस्कृतभाषाब्धेः परं पारमासाद्य शास्त्रसागरमुल्लङ्घ्य च तत्र तत्र निवसतः पण्डितगणान्पराभवतिस्म । सच तैस्तैः पण्डितैर्विवदमानस्तांस्तान्विदुषो विजयमानस्तत्रतत्र प्रदेशे सनातनं भारतधर्ममुत्सादयमानो निराकुर्वन्प्रतिपक्षान्प्रतिपादयन्यवनधर्मं परिखण्डयन् शास्त्राणि क्षेपयन्नखिलया संस्कृतगिरा भारतीयान्विबुधानवजिताशेषदक्षिणप्रदेशः सकलविद्यावैशद्यावभासितां नानाविधबुधमण्डलीमण्डितां पण्डिताग्रेसरसमुपक्रम्यमाणदार्शनिकविषयचर्चामर्चानुकूलफलसमर्पणकल्पपादपायमानेन भगवता शशिखण्डमौलिना समुद्भासितां भासिताशेषत्रिभुवनया परमपावनया मन्दाकिनीदेव्या परिगतां समुपचीयमानसुकृतराशिं काशीं नाम गरीयसीं नगरीमुपतस्थौ । ततश्च तत्रत्यान्विबुधानाह्वयमानः काजी सभां महीयसीं निर्माय विवादमारिप्सामास । पण्डिता अपि तदानीमेवाहंपूर्विकया सभामागत्य विविधाभिर्युक्तिभिर्नानाविधाभिर्वचनरचनाभिः परिस्फुरन्तीभिः प्रणामपरम्पराभिश्च काजीं जेतुमयतन्त । काजी तु पवन इव पथि पतितांस्तृणच्छेदांस्तानि वचनजालानि क्षणादेव प्रतिक्षिपन्नखण्डितमतः करनखराग्रैरानाभि लम्बमानां धवलकीर्तिसंततिमिव पुञ्जीभूयोपागतां कूर्चिकां[1] परिष्कुर्वन् सावहेलमग्रासनमधिरुरोह । तदनु विवादेऽप्रभविष्णवोऽप्यपमानासहिष्णवो वाराणसीनिवासिनो द्विजन्मानोऽनुचरविपदपहर्तारं सृष्टिस्थितिप्रलयकर्तारं निजपरिचरप्रतिभटखण्डनं सुधाकरकलामण्डनं समुपेत्यानन्यगतेन मनसा नानाविधाभिस्तत्कालसमुचिताभिः करुणरसपरिप्लुताभिः स्तुतिभिस्तमेव

१ दाढीतिप्रसिद्धाम् ।

भगवन्तमुपवीणयामासुः । अवगताशेषवृत्तान्तश्च भगवान्भुजगभूषणो भागीरथीमौलिर्महेश्वरस्तदात्व एव प्रत्यक्षीभूय वाचमेतामुदीरयामास । अस्त्यत्र कस्यापि रत्नेश्वरनाम्नो द्विजन्मनो धनिकस्य सदन आम्भसिक[1]: कश्चिद्भिक्षुः स एवास्यावलिप्तस्य यवनहतकस्य पराजये प्रभवतीति स एवाभ्यर्थ्यतामिति । ते तु ब्राह्मणाः फलमिवात्मनो मनोरथद्रुमस्य तद्वचनमाकर्ण्य द्रुतपदं रत्नेश्वरश्रेष्ठिनो भवनमागत्यासाद्य च श्रेष्ठिनं भगवतो निदेशमावेदयामासुः । सच तेषां तद्वचनमाकर्ण्य परं विस्मयमापन्नस्तमेव नीराधिकृतमात्मनो दासं समाहूय निजगादाभिलषितं ब्राह्मणसमाजस्य । अपृच्छच्च अपि प्रभवसि कर्मण्येतस्मिन्निति । ततो धीवरजालायमानेनासंख्येयतन्तुसन्तानेनाजानुलम्बिना मलीमसेन वसनेनावेष्टिताधःकायो जठरभरमन्थरगतिरंसमुभयतः प्ररूढैर्जलकुम्भवहनसंजातैः किणैः समुल्लसितः पीवरतनुः श्यामायमानेन चैलखण्डेन वेष्टितोत्तमाङ्गो घटीचेटो हुंकरिष्याम्येतद्यदि भवन्तोऽनुजानीयुरिति मन्दंमन्दं प्रत्ययोजिष्ट । ततः श्रेष्ठिना समर्पिते तस्मिन्प्रमुदिता ब्राह्मणाः कौशेयानि पट्टवसनानि परिधाप्य अनर्घ्यैर्भूषणैरलंकृत्योष्णीषसमुल्लसितं च तस्य मूर्धानं विधाय कनकशिबिकायामारोप्य महीयसा महोत्सवेन विरचितायां सभायामानाय्य तमुपवेशयामासुः । काजीरपि समाहूतागतस्तस्यैव संमुखमुपाविक्षत् । ततो दोलायमानकूर्चिकाकलापं समुद्धूयमानश्मश्रुजालं च प्रवदता काज्या सह प्रववृते भिक्षोर्विवादः । अन्ते पुनर्भिक्षुवचनचातुरीविस्मितोऽश्रुतपूर्वाः सहस्रशो युक्तीराकर्ण्येतिकर्तव्यतामूढो विवादसागरमुत्तरीतुमप्रभविष्णुः काजी तूष्णींभावमवलम्ब्य भिक्षुं प्रण-

---

१ अम्भःपूरणाधिकृतो विप्रः ।

नाम । ततो विजितं विजितं भिक्षुणेति सतालरवं प्रवृत्तेषु वचनेषु तदानीमेव मूर्च्छत्सु तूर्येष्वाहन्यमानेषु मुरजेषु ध्वन्यमानेषु दुन्दुभिषु आध्मायमानेषु शङ्खेषूच्चरत्सु क्ष्वेलानुकारिषु सिंहनर्दिकाक्रेंकारेषु महोत्सवमय इव मङ्गलमय इव प्रमोदमय इव विजयमान इव यशोमय इव च तस्मिन्समये सबहुमानं सप्रणामं च सौवर्णं यानमारोप्य भिक्षुं श्रेष्ठिनः सदनमानाय्य यथावृत्तं वृत्तं निजगदुर्द्विजन्मानः । ततस्तु समुद्भूतजिज्ञासाः सर्वेऽपि तस्य भिक्षोः कुलं नाम विद्यामभिजनं च पप्रच्छुः । तस्मिंश्चाशेषतोऽपि तेन कथिते निश्चिक्युः काशीस्था विबुधा अयमेव पण्डितराजो जगन्नाथ इति । काजी तु ततः प्रभृति तस्य पण्डितराजजगन्नाथस्य मित्रतामुपागच्छत् । ततो गच्छता कालेन दिल्लीं गतो बादशाहं विज्ञाप्य जगन्नाथमपि दिल्लीनगर एवानाययामास । ततः प्रभृति च प्ररूढं जगन्नाथबादशाहयोः सौहार्दमिति । एतादृश्यन्यान्यपि लोकोत्तराणि चरितानि नैकशः सन्त्यस्य महामहिमभाजः पण्डितरायस्य तथापि स्थलतानवादिग्दर्शनेनैवालमिति विरम्यते ।



श्रीः ।

जगन्नाथपण्डितराजप्रणीता

# गङ्गालहरी ।

## पीयूषलहरीव्याख्यासहिता ।

नमः श्रीगङ्गायै ।

पितुः स्कन्धे स्थित्वा विमलमुकुरालोकानधिया
हिमांशुं व्याकर्षन्नहिभयविदूनेन मनसा ।
विधुं हित्वा वह्निं सरसमणिबुद्ध्या गिरिभुवा
शुभं भीतो नीतो दिशतु बहु वः शंभुतनयः ॥ १ ॥

गङ्गे त्वद्वारिधारा भवमरणजरापारवारास्तु सारा
राजद्देवादिनारीविहरणविलसत्तीरनीरातुषारा ।
दैत्यारात्यङ्घ्रिचारा हरगिरिसुशिरोदेशभारातिधीरा
रूपेणाक्रान्तमारा निजजनवृजिनौघौघहाराविहारा ॥२॥

अम्बां निजमुखाक्रान्तचन्द्रबिम्बां नमाम्यहम् ।
केदारं वैरिसंदारं मुक्ताहारं च सुन्दरम् ॥ ३ ॥

येनाकारि दशास्यो दशमुखहीनोऽपि बाणसङ्घेन ।
निजजायाचौर्यकरः सो वोऽवतु जानकीकान्तः ॥ ४ ॥

हरिं रामं गुरुं नत्वा भास्करप्रीतये मया ।
पीयूषलहरीव्याख्या क्रियते हि यथामति ॥ ५ ॥

अत्रैवं श्रूयते—कविर्जगन्नाथो दिल्लीवल्लभाश्रितस्तद्यवनी-

संसर्गदोषभाक् सन् , गङ्गासकाशात् द्विपञ्चाशत्सोपानान्तरितनिजगृहेऽवस्थितः तत्रैव च जाह्नव्यागमनस्पर्शनेनात्मशुद्धिं कामयमानः, 'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यःपरनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥' इति काव्यप्रकाशोक्तेः शिवेतरक्षतिफलकगङ्गास्तुतिरूपं काव्यं चिकीर्षुर्विघ्नविघाताय वस्तुनिर्देशात्मकं मङ्गलमाचरन् स्वाभिमतं प्रार्थयते—

समृद्धं सौभाग्यं सकलवसुधायाः किमपि त-
न्महैश्वर्यं लीलाजनितजगतः खण्डपरशोः ।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां
सुधासौन्दर्यं ते सलिलमशिवं नः शमयतु १

समृद्धमिति । भो गङ्गे, ते तव । युष्मदः षष्ठ्येकवचनविशिष्टस्य 'तेमयावेकवचनस्ये'ति ते आदेशः 'युष्मदर्थश्च' संबोध्यः । युष्मदः संबोध्य स्वतन्त्रः कर्ता अस्मदो वाच्यः इत्यभियुक्तोक्तेरित्याद्यन्यत्र विस्तरः । तत्सलिलम् सलति भक्तजनपापादिनाशाय गच्छतीति सलिलं जलम् । 'षल गतौ' 'सलिकली'त्युणादिसूत्रेण लच् । 'सलिलं कमलं जल'मित्यमरः । एवंचाशिवशमनप्रार्थनं युक्तमिति भावः । नः अस्माकमशिवं अकल्याणम् शमयतु नाशयतु । प्रार्थनायां लोट् । तत्किम् । यत्सलिलं सकलवसुधायाः सकला चासौ वसुधा च सोर्वी तस्याः 'वसुधोर्वी वसुंधरे'त्यमरः । यद्वा कलाभिः सहिता सकला वसु धनं धत्ते इति वसुधा सकला चासौ वसुधा च तस्याः किमपि अनिर्वचनीयममौल्यं वा समृद्धं बहु सौभाग्यं शोभादायकं अतिचतुरायाः

सधनाया अपि पृथिव्याः गङ्गासलिलं विना न शोभेति, लोकेऽपि अतिचतुरायास्ताटङ्कनूपुराद्यलंकारसहिताया अपि प्रमदायाः कुङ्कुमकृष्णमणिभिर्विना न शोभा भवतीत्यापामरप्रसिद्धम् । पुनस्तत्किम् । यत् लीलाजनितजगतः लीलया विलासेन नतु श्रमेण जनितान्युत्पादितानि जगन्ति चतुर्दश भुवनानि येन सः तस्य खण्डपरशोः खण्डयति रिपून् हिनस्तीति खण्डः तादृशः परशुः शस्त्रविशेषो यस्य भूतेशस्य । 'भूतेशः खण्डपरशु'रित्यमरः । महैश्वर्यं महच्च तदैश्वर्यं च महाविभूतिभूतम् । 'विभूतिर्भूतिरैश्वर्य'मित्यमरः । 'सन्महदि'ति समासे 'आन्महतः'इत्यात्वे वृद्धिः । गङ्गासलिलमात्रसहायेनेश्वरेण विलासादेव चतुर्दशभुवनानि कृतानीति भावः । लोकेऽपि कश्चन धने सहाये सति लीलया ब्रह्मपुर्यादिकं निर्मातीति प्रसिद्धम् । पुनः तत्किम् । यत् श्रुतीनां श्रूयते धर्मो याभिस्ताः श्रुतयः चत्वारो वेदाः 'श्रुजजी'त्यादिना क्तिन् । 'श्रुतिः स्त्री वेद आम्नायः' इत्यमरः । तेषां सर्वस्वं सर्वं च तत्स्वं च सर्वस्वम् । इदमेव वेदानां धनमिति भावः । यद्वा सर्वं च तत्स्वं च आत्मा । इदं सलिलमेव वेदानामात्मेति भावः । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः । पुनस्तत्किम् । अथ यत्सुमनसां सुपर्वणाम् । 'सुपर्वाणः सुमनसः' इत्यमरः । मूर्तं सशरीरं सुकृतं पुण्यम् । 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्यमरः । पु० यत्सुधासौन्दर्यं सुधेवामृतमिव सौन्दर्यं यस्य तत् । अतिशुभ्रमित्यर्थः । मधुरास्वादच्चिरजीवित्वादितत्कार्यकारीति वा । यद्वा सुधासौदर्यमिति वा पाठः । सुधेति पृथक्पदम् । चन्द्रो

मुखमितिवत्सलिलविशेषणम् । पु० सौदर्यं सम्यक्कुदरी हिमाचलकन्दरं तत्र भवं सौदरं भवार्थेऽणू । सौदरमेव सौदर्यमिति चातुर्वर्ण्यादित्वात्ष्यञ् । आदौ हिमाचले प्रकाशितमिति भावः । अथवा सुधायाः सौदर्यं भ्रातृरूपम् 'सोदराद्यत्'इति यः । अत्र दरस्मितमिति श्लोकपर्यन्तं शिखरिणीछन्दः । तल्लक्षणं तु 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी'ति वृत्तरत्नाकरोक्तम् । 'शिखरिणी य्मौन्सौम्लौग्पृतुरुद्राः' इति पैङ्गलं च बोध्यम् । ननु छन्दोन्तरं त्यक्त्वानेनैव छन्दसा किमिति वर्णनमिति चेदत्रोच्यते—शिखरिणीछन्दसि जलदेवताकयगणस्यादौ सत्त्वेन जलस्पर्शरूपाभिमतफलसिद्धिर्भविष्यतीत्याशयेन अशोकवनिकान्यायेन वेति कृतधियो विदांकुर्वन्तु । तदुक्तम्—'मो भूमिः श्रियमातनोति य जलं वृद्धी र वह्निर्मृतिं सो वायुः परदेशदूरगमनं त व्योम शून्यं फलम् । जः सूर्यो रुजमादधाति विपुलां भेन्दुर्यशो निर्मलं नो नाकः सुखमीप्सितं फलमिदं प्राहुर्गणानां बुधाः' इति । किमपितनू इत्येकं पदं वा । किमपि अनिर्वचनीयं मोक्षप्राप्तिरूपफलं तनोति विस्तारयतीति किमपि तनू 'तनु विस्तारे' क्विप् । एतत्पक्षे कथंभूतं जलमिति योज्यम् । अत्र वाचकलुप्तोपमालंकारः । तदुक्तम् 'उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः' इति । समृद्धं सौभाग्यमिति आदौ रूपकं च । रूपकोपमयोः संकरः ॥ १ ॥

इदानीं प्रवाहरूपत्वेन जलं वर्णयन्स्वाभिमतं प्रार्थयते—

**दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां**
**द्रुतं दूरीकुर्वन्सकृदुपगतो दृष्टिसरणिम् ।**

अपि द्रागा[1]विद्याद्रुमदलनदीक्षागुरुरिह
प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः २

दरिद्राणामिति। भो गङ्गे, इहास्मिन् लोके ते तव वारां अपां 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः। अयं पुरोवर्ती सन्निकृष्ट इदंशब्दार्थः। तदुक्तम् 'इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीया'दिति। प्रवाहो निर्झरः। 'प्रवाहो निर्झरो झरः' इत्यमरः। नः अस्माकं अपारां अनन्तां श्रियं दिशतु ददातु। 'दिश अतिसर्जने' इति धातोः प्रार्थनायां लोट्। अतिसर्जनं दानम्। किं कुर्वन्सन्। दृष्टिसरणिं नेत्रमार्गम्। 'सरणिः पद्धतिः प'द्येत्यमरः। सकृदपि एकवारमपि गतः सन् प्राप्तः सन् दरिद्राणां रङ्काणां दैन्यं दीनताम्। अथानन्तरं दुर्वासनहृदां दुष्टा वासना यस्य तद्दुर्वासनं तादृशं हृत् येषां तेषां। 'स्वान्तं हृन्मानसं मनः' इत्यमरः। दुरितमपि पापमपि। 'अंहोदुरितदुष्कृत'मित्यमरः। द्रुतं शीघ्रं दूरीकुर्वन्। अभूततद्भावे च्विः। 'कुगती'ति समासः। कथंभूतः प्रवाहः। द्रागाविद्याद्रुमदलनदीक्षागुरुः आसमन्तादविद्याः मायाः आविद्याः। अखिला अविद्या इत्यर्थः। मायाबहुत्वे प्रमाणं तु 'इन्द्रो मायाभि'रिति श्रुतौ बहुवचनम्। अतएव तत्त्वज्ञानादेकस्य मुक्तौ कृत्स्नमुक्तिप्रसङ्गः स्यात्। मायैक्येन तन्निवृत्तौ क्वापि संसाराभावादिति शङ्कालेशोऽपि नेति शंकरभाष्यादिग्रन्थेभ्योऽवधेयमिति दिक्। तद्रूपो यो द्रुमः वृक्षः तस्य

---

१ द्रागाविद्यद्रुम इति पाठः।

दलनं छेदनं द्रागाविद्याद्रुमदलनं तस्य दीक्षा उपदेशः तस्याः गुरुः बोधकः। अत्रापि दृष्टिसरणिं सकृदपि गतः सन्निति योजनीयम्। सकृत्प्रवाहदर्शनेनाविद्या गच्छतीति भावः। 'द्रागाविद्यद्रुमे'ति वा पाठः। अत्राऽविद्यायाः इमे आविद्याः ते च ते द्रुमाश्च। शेषं पूर्ववत् ॥ २ ॥

इदानीं तरङ्गरूपत्वेन जलं वर्णयन्नाशिषं प्रयुञ्जते—

उदञ्चन्मार्तण्ड[1]स्फुटकपटहेरम्बजननी-

कटाक्षव्याक्षेपक्षणजनितसंक्षोभनिवहाः।

भवन्तु त्वङ्गन्तो हरशिरसि गङ्गातनुभुव-[2]

स्तरङ्गाः प्रोत्तुङ्गा दुरितभयभङ्गाय भवताम् ३

उदञ्चदिति। गङ्गातनुभुवः गङ्गायास्तनुः मूर्तिः। 'स्त्रियां मूर्तिस्तनुस्तनू'रित्यमरः। तस्याः भवन्ति ते गङ्गातनुभुवः। भवतेः क्विप् 'न भूसुधियो'रिति यण्निषेधादुवङ्। प्रोत्तुङ्गाः उन्नताः एतादृशास्तरङ्गा ऊर्मयः। 'भङ्गस्तरङ्ग ऊर्मिर्वे'त्यमरः। भवतां भक्तजनानां दुरितभयभङ्गाय दुरितं च भयं च तयोर्भङ्गाय नाशाय। 'क्रियार्थोपपदे'ति चतुर्थी। भवन्तु। आशिषि लोट्। कथंभूतास्तरङ्गाः। उदञ्चन्मार्तण्डस्फुटकपटहेरम्बजननीकटाक्षव्याक्षेपक्षणजनितसंक्षोभनिवहाः। हे शिवे रम्बते शब्दं करोतीति हेरम्बः लम्बोदरः। 'हः शंकरे हरौ हंसे रणरोमाञ्चवाजिषु' इति नानार्थमञ्जरी। 'अबि रबि शब्दे' पचाद्यच्। 'तत्पुरुषे कृती'ति सप्तम्या अलुक्। 'अप्येकदन्तहेरम्बलम्बोदरगजाननाः'

१ मात्सर्यस्फुट इति पाठः। २ गाङ्गाः पुनरमी इति पाठः।

इत्यमरः । हेरम्बस्य जननी माता पार्वती तस्याः कटाक्षाः अपाङ्गदर्शनानि । 'कटाक्षोऽपाङ्गदर्शने' इत्यमरः । स्फुटं च तत्कपटं च व्याजं च । 'कपटोऽस्त्री व्याजे' त्यमरः । स्फुटकपटेन हेरम्बजननीकटाक्षाः उदञ्चन् उदयं प्राप्नुवन् यो मार्तण्डः अर्कः । 'विकर्तनार्कमार्तण्डे'त्यमरः । उदञ्चन्मार्तण्डवत् स्फुटकपटहेरम्बजननीकटाक्षाः । अतिरक्ता इत्यर्थः । तेषां व्याक्षेपः विलम्बः । चिरकालपर्यन्तं कटाक्षस्थितिरित्यर्थः । यद्वा व्याक्षेपः संबन्धः तेन क्षणं क्षणपर्यन्तं जनित उत्पादितः तादृशः संक्षोभनिवहो भयसमूहो येषां ते । पुनः कथंभूताः । अतएव हरशिरसि स्वाधारभूते महादेवमस्तके त्वङ्गन्तः कम्पन्तः इतस्ततो गच्छन्तो वा । 'त्वगि कम्पने' इत्यस्मात् 'उखउखी'ति दण्डके पठितगमनार्थकत्वादुभयार्थकत्वम् । क्वचित्तु उदञ्चन्मात्सर्येति पाठः । तत्र सापत्न्यभावादुदञ्चन्मात्सर्येणेति व्याख्येयम् ॥३॥

इदानीं त्वदाश्रयान्मया सर्वे सुरास्तृणप्रायीकृताः, अधुना यदि त्वं मे कार्यकरणे उदासीना भवसि तर्हि अहं केषामग्रे रोदनं करोमीत्याह—

तवालम्बादम्ब स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः ।
इदानीमौदास्यं भजसि यदि भागीरथि तदा
निराधारो हा रोदिमि कथय केषामिह पुरः ४

तवेति । भो अम्ब जननि, 'अम्बार्थनद्यो'रिति ह्रस्वः । तवालम्बादाश्रयात् स्फुरदलघुगर्वेण स्फुरन्देदीप्यमानः अलघु-

महान् गर्वोऽहंकारो यस्य तेन मया सर्वे सुरगणाः अवज्ञासरणिं अवज्ञाया अवहेलनस्य सरणिस्तां सहसा अविचारेण नीताः प्रापिताः । अत्र 'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणा'मिति भाष्योक्तेः सुरगणरूपे प्रधानकर्मणि क्तः । अतएवाभिहितत्वात्तत्र प्रथमेति दिक् । भो भागीरथि भगीरथस्येयं भागीरथी तत्संबोधनम् । 'तस्येद'मित्यणि 'टिड्ढाणे'ति ङीप् । इदानीमुद्धारसमये यदि औदास्यं उदासीनत्वम् । उद्धारानुकूलव्यापारशून्यत्वमित्यर्थः । भजसि अङ्गीकरोषि, तदा तर्हि निराधारः निर्गत आधारो यस्य सः एतादृशोऽहं इह लोके केषां पुरः अग्रे रोदिमि रोदनं करोमि । हा इति खेदे कष्टे वा । इति त्वं कथय वद । 'रुदिर् अश्रुविमोचने' 'रुदादिभ्यः सार्वधातुके' इतीट् । देवानामवहेलनात्तैस्त्यक्तः, त्वमपि अस्मिन्समये यदि त्यजसि तर्हि मे का गतिरिति त्वमेव कथयेति भावः ॥ ४ ॥

पुनरपि प्रवाहरूपं स्मरन्पापहरणं प्रार्थयते—

**स्मृतिं याता पुंसामकृतसुकृतानामपि च या**
**हरत्यन्तस्तन्द्रां तिमिरमिव चन्द्रांशुसरणिः ।**
**इयं सा ते मूर्तिः सकलसुरसंसेव्यसलिला**
**ममान्तःसंतापं त्रिविधमपि पापं च हरताम् ५**

स्मृतिमिति । हे गङ्गे, तव प्रवाहरूपा मूर्तिः अकृतसुकृतानां अतीताद्यतनजन्मसु कृतपातकानां पुरुषाणामपि स्मृतिं स्मरणं याता प्राप्ता सती चन्द्रांशुसरणिः चन्द्रस्यांशवः कि-

रणाः तेषां सरणिः पङ्क्तिः । 'सरणिः पद्धति' रित्यमरः । तिमिरं अन्धकारं यथा तथा अन्तस्तन्द्रां अन्तःकरणाज्ञानालस्यं नाशयति । यथा चन्द्रोदयेन तमो नश्यति तथा तव सरणेन महापातकिनां तत्सदृशानां पातकं नश्यति । पुनः किंभूता मूर्तिः । सकलसुरसंसेव्यसलिला सकलाः सुरा देवाः तैः संसेवनीयजला एतादृशी ते मूर्तिः ममान्तःसंतापं अन्तःकरणस्थं त्रिविधं कायिकवाचिकमानसिकरूपं पापं च तत्कृतं संतापमाधिभूताध्यात्माधिदैवं वा हरताम् । तथा जाते जन्ममरणकष्टान्मुक्तः स्यामिति भावः ॥ ५ ॥

इदानीं राज्यत्यागपूर्वकं त्वत्तीरवासिनां त्वदम्भःपानेन जायमान आनन्दः ततो न्यूनसुखं मोक्षमुपहसतीत्याह—

अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा
विलोलद्वानीरं तव जननि तीरं श्रितवताम् ।
सुधातः स्वादीयःसलिलभरमातृप्ति पिबतां
जनानामानन्दः परिहसति निर्वाणपदवीम् ६

अपीति । भो जननि, प्राज्यमपि प्रभूतमपि । 'प्रचुरं प्राज्य' मित्यमरः । समुद्रान्तमपीत्यर्थः । एतादृशं राज्यं राज्ञः कर्म । पुरोहितादित्वाद्यक् । प्रजापालनात्मकं सहसा तृणमिव । परित्यज्य । अनेन लोभाभावः सूचितः । विलोलद्वानीरं विलोलन्तः वायुना चञ्चलाः वानीराः वेतसवृक्षाः यस्मिन् तत् । वेतसपर्याये 'रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः' इत्यमरः । अनेन छायानिबिडत्वं सूचितम् । एतादृशं तव तीरं । 'कूलं रोधश्च तीरं

चे'त्यमरः । श्रितवतां सेवतां सुधातः अमृतात् । पञ्चम्यन्तात्तसिल् । स्वादीयःसलिलभरम् । अतिशयेन स्वादुः स्वादीयान् । अतिशायने ईयसुन् । स च चासौ सलिलभरश्च तं आतृप्ति तृप्तिपर्यन्तम् । 'पञ्चम्यपाङ्परिभि'रिति समासः । पिबतां पानं कुर्वताम् । पाधातोः शतरि 'पाघ्रे'ति पिबादेशः । एतादृशानां जनानामानन्दः निर्वाणपदवीं निर्वाणस्य कैवल्यस्य पदवीं मार्गम् । 'मुक्तिः कैवल्यनिर्वाण'मित्यमरः । परिहसति उपहसति ॥६॥

इदानीं साक्षात्स्वयं स्नानमकुर्वतामपि त्वयि अन्यसंबन्धित्वेन स्वावयवपतने तेषामप्युत्तमलोकप्राप्तौ साक्षात्स्नानिनां किं वक्तव्यमित्याह—

प्रभाते स्नान्तीनां नृपतिरमणीनां कुचतटी-
गतो यावन्मातर्मिलति तव तोयैर्मृगमदः ।
मृगास्तावद्वैमानिकशतसहस्रैः परिवृता
विशन्ति स्वच्छन्दं विमलवपुषो नन्दनवनम् ७

प्रभात इति । भो मातः । प्रभाते उषसि । 'प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि । प्रभातं चे' त्यमरः । स्नान्तीनामर्थात्तव जले स्नानं कुर्वतीनां नृपतिरमणीनां राजसुन्दरीणाम् । ब्राह्मणादिस्त्रीणां दारिद्र्यबाहुल्यान्मृगमदो न मिलतीत्युक्तं नृपतिरमणीनामिति । तासां तु संपत्तिबाहुल्यात्स सुलभ इति भावः । कुचतटीगतः कुचानां तट्यः प्रान्ताः तासु गतः विद्यमानः । तटशब्दाज्जातिलक्षणो ङीप् । 'तटं त्रिषु' इति कोशात् स्त्रियामपि तटशब्दः । रात्रौ रतिसमये लापितः अतः

एव स्थित इत्यर्थः। एतादृशो मृगमदः कस्तूरी। 'मृगनाभिर्मृगमदः कस्तूरी चे'त्यमरः। तव तोयैरम्भोभिः। 'सहयुक्ते' इति तृतीया। 'अम्भोऽर्णस्तोयपानीय'मित्यमरः। यावद्यस्मिन्नेव काले मिलति संबद्धो भवति तावत्तस्मिन्नेव काले मृगाः मृगयन्ति उदरपोषणाय तृणादिकमन्वेषयन्ति ते मृगाः हरिणाः। 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इत्यमरः। विमलवपुषः विमलं मलरहितं वपुर्येषां ते एतादृशाः सन्तो नन्दनवनं नन्दयतीति नन्दनम्। नन्द्यादित्वाल्ल्युः। तच्च तद्वनं च इन्द्रोद्यानं नन्दनवनम्। 'अस्योद्यान' मित्यमरः। स्वच्छन्दं यथा स्यात्तथा विशन्ति। गच्छन्तीत्यर्थः। क्वचित्तु 'विमलमतय' इति पाठः। कथंभूता मृगाः। वैमानिकशतसहस्रैः विमानैश्चरन्ति गच्छन्तीति वैमानिका देवाः। 'चरती'ति ठक्। तेषां शतानि शतानां सहस्राणि तैः परिवृता वेष्टिताः॥ ७॥

इदानीं स्मरणोच्चारणाभ्यां क्रमेण मनःशान्ति-पाप-संसारताप-नाशजनकं गङ्गेति पदं मरणसमये मन्मुखेऽस्त्वित्याह—

स्मृतं सद्यः स्वान्तं विरचयति शान्तं सकृदपि[1]
प्रगीतं यत्पापं झटिति भवतापं च हरति।
इदं तद्गङ्गेति श्रवणरमणीयं खलु पदं
मम प्राणप्रान्ते वदनकमलान्तर्विलसतु ८

स्मृतमिति। भो भागीरथि, तत् गङ्गेति पदं सुबन्तं मम

१ सुखयति नितान्तं इति पाठः।

जगन्नाथस्य प्राणप्रान्तः प्राणानामसूनां। 'पुंसि भून्म्यसवः प्राणाः' इत्यमरः। अन्तः समाप्तौ। अन्तःशब्दोऽधिकरणप्रधानमव्ययम्। प्राणोत्क्रमणसमय इत्यर्थः। वदनकमलान्तः वदनमेव कमलमिति मयूरव्यंसकादित्वात्समासः। वदनं कमलमिवेत्युपमितसमासो वा। तस्यान्तर्मध्ये विलसतु शोभतु। खलु निश्चयेन। प्राणोत्क्रमणसमये गङ्गागङ्गेत्युच्चारणं भवतु। कफवातपित्तैः कण्ठावरोधनं मास्त्विति भावः। तत् कियत् गङ्गेति पदं सकृदपि एकवारमपि स्मृतं सत् चिन्तितं सत् स्वान्तं मनः शान्तं इन्द्रियनिग्रहक्षमं द्वेषलोभादिरहितं वा विरचयति करोति। शान्तं सुखयुक्तं वा। शान्तशब्दादर्शआद्यच्। 'शर्मशातसुखानि चे'त्यमरः। 'रच प्रतियत्ने' चुरादिः। पुनस्तत्किम्। यत्सकृदपि प्रगीतं सत् प्रकर्षेण गीतं उच्चारितं सत् पापं च, पुनः भवतापं भवस्य संसारस्य तापं च हरति नाशयति। पुनः किम्। श्रवणरमणीयं श्रवणयोः रमणीयं सुखजनकम्। 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः। यद्वा श्रवणाय श्रवणं कर्तुं रमणीयं सुन्दरम्। 'चतुर्थी'ति योगविभागात्समासः। गङ्गाशब्दार्थस्तु गां पृथ्वीं स्वर्लोकादागता गङ्गा 'गनाम्यघो'रित्यौणादिको गन्प्रत्ययः। तदुक्तं ब्रह्माण्डपुराणे—'तिस्रो नद्यो महापुण्या वेणा गोदा च जाह्नवी। गां हरीशाङ्घ्रिकात्प्राप्ता गङ्गेतीह प्रकीर्तिते'ति। हरेः पादाच्छम्भोर्मस्तकाच्च गां प्राप्तेति तदर्थः। यद्वा गम्यते सोपानभूतया यया स्वर्गः सा गङ्गा। तदुक्तमाचार्यैः 'स्वर्गसोपानसङ्गे'इति। यास्केनापि निरुक्ते 'गमनाद्गङ्गे'ति सामान्यत एवोक्तमिति दिक्॥ ८॥

इदानीं करटानामपि इन्द्रोद्यानापेक्षया प्रियतरं तव तीरं मम श्रमनाशनसमर्थमस्त्विति प्रार्थयते—

यदन्तः खेलन्तो बहुलतरसंतोषभरिता
न काका नाकाधीश्वरनगरसाकाङ्क्षमनसः।
निवासाल्लोकानां जनिमरणशोकापहरणं
तदेतत्ते तीरं श्रमशमनधीरं भवतु नः॥९॥

यदिति। भो भागीरथि, ते तव तत् एतत् समीपवर्ति तीरं नः अस्माकं श्रमशमनधीरं श्रमस्य शमनं तत्र धीरं समर्थं पण्डितं वा। 'धीरो मनीषी ज्ञः प्राज्ञः संख्यावान्पण्डितः कवि'-रित्यमरः। भवतु अस्तु। तत्किम्। यदन्तः यस्य तीरस्यान्तः मध्ये खेलन्तः क्रीडन्तः काकाः करटाः। 'काके तु करटारिष्टे'-त्यमरः। बहुलतरसंतोषभरिताः सन्तः अतिशयेन बहुलः बहुलतरः। अतिशायने तरप्। बहुलतरश्चासौ संतोषश्च तेन भरिताः पूर्णाः एतादृशः सन्तः नाकाधीश्वरनगरसाकाङ्क्षमनसः नाकस्य स्वर्गस्य। 'स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः'इत्यमरः। अधीश्वरः पतिः इन्द्रः तस्य नगरं अमरावती तत्र साकाङ्क्षं साभिलाषं मनो येषां ते एतादृशा न भवन्तीति शेषः। अमरावत्यपेक्षया तीरे अधिकगुणसत्त्वादित्यर्थः। तदेवाह। कथंभूतं तीरम्। निवासाद्धेतोः। 'विभाषा गुणे स्त्रिया'मिति हेतौ पञ्चमी। लोकानां जनिमरणशोकापहरणं जनिरुत्पत्तिः। 'जनिरुत्पत्तिरुद्भवः'इत्यमरः। मरणं निधनम्। 'मरणं निधनोऽस्त्रिया'मित्यमरः। शोकः पुत्रकलत्रादिवियोगजनितमनोविकृतिरूपः। त्रयाणां

द्वन्द्वः । एषामपहरणं नाशकम् । अमरावत्यां तु 'क्षीणे पुण्ये मृत्युलोकं विशन्ती'ति पुनरपि भूलोकप्राप्तिरूपानिष्टमप्यस्तीति भावः । कदाचित् विमानस्थेनेन्द्रेण गङ्गातीरे खेलतः काकान्दृष्ट्वा युष्माभिः क्रीडार्थं मद्वने आगन्तव्यमित्युक्ते अत्रैव वयं निवसामः न तव वने आगमिष्याम इति तैरुक्तमिति स्पष्टं गङ्गापुराणे ॥ ९ ॥

ननु सर्वोत्कृष्टं वेदाद्यगोचरं परं ब्रह्म विहाय स्वाभिमतफलावाप्तये मामेव किं स्तौषीति चेत्तादृशं ब्रह्म तत्त्वमेव नेतरविषय इत्याह—

न यत्साक्षाद्वेदैरपि गलितभेदैरवसितं
न यस्मिञ्जीवानां प्रसरति मनोवागवसरः ।
निराकारं नित्यं निजमहिमनिर्वासिततमो
विशुद्धं यत्तत्त्वं सुरतटिनि तत्त्वं न विषयः १०

न यदिति । भो सुरतटिनि, सुराणां देवानां तटिनी धुनी तत्संबोधनम् । 'तटिनी ह्रादिनी धुनी'त्यमरः । तद्वक्ष्यमाणविशिष्टत्वं निखिलजगत्कारणत्वेन प्रसिद्धं ब्रह्मत्वम् । सर्वं वाक्यं सावधारणमितिन्यायात्त्वमेवेत्यर्थः । असीति शेषः । न विषयः । त्वमितरविषयभूता नासीत्यर्थः । तत्किम् । यत् ब्रह्म गलितभेदैः गलितः गतः भेदो येभ्यस्ते गलितभेदाः तैरद्वैतप्रतिपादकैः 'नेह नानास्ति किंचने'त्यादि ब्रह्मरूपैः साक्षाद्वेदैरपि प्रत्यक्षश्रुतिभिरपि न अवसितम् । इयत्तया न निश्चितमित्यर्थः । 'षोऽन्तकर्मणी'ति धातोः'द्यतिस्यती'तीत्वम् । उपसर्ग-

वशादुक्तार्थलाभः। तदुक्तम्-'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते' इति। ननु 'नेह नानास्ति' इत्यादिश्रुतिभिः इतराभावबोधनेऽपि स्वाभावाबोधेन कथमद्वैतसिद्धिरितिचेन्न। स्वस्मिन्नपि स्वप्रवृत्त्या स्वाभावस्यापि बोधनात्। अतएव 'ससजुषो रुः' 'खरवसानयोर्विसर्जनीयः' इत्यादिनिर्देशाः संगच्छन्त इति दिक्। वेदानामप्यगोचरमित्युक्तत्वादिति भावः। पुनः कथंभूतम्। यस्मिन्ब्रह्मणि जीवानां व्यासादिविद्वत्प्राणिनां मनोवागवसरः मनश्च वाक् च अनयोः समाहारः मनोवाक्। 'द्वन्द्वश्च प्राणी'त्येकवद्भावः। मनोवाचोः अवसरः। व्यापार इति यावत्। न प्रसरति। न प्रसरणशीलो भवतीत्यर्थः। 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'तिश्रुतेरिति भावः। ननु मनोवागित्यत्र 'द्वन्द्वश्च प्राणी'ति नियमान्नित्यसमाहारे 'द्वन्द्वाच्चुदषहान्ता'दिति टचा भाव्यम्। तथाचोक्तप्रयोगासंगतिरितिचेन्न। समासान्तविधेरनित्यत्वात्। अत्र प्रमाणं तु अश्वादिगणे राजन्शब्दपाठ इति दिक्। मनःशब्दस्य प्राण्यङ्गत्वाभावेन शङ्कैव नेति वा। पुनः कथंभूतम्। निराकारं निर्गतः आकारो यस्य तत्। अशरीरमित्यर्थः। 'अपाणिपाद'इत्यादिश्रुतेः। पुनः कथंभूतम्। नित्यं निरन्तरं भवं नित्यम्। अव्ययात्त्यप्। उत्पत्त्यादिशून्यमित्यर्थः। 'न जायते म्रियते' इत्यादिस्मृतेरित्यर्थः। पुनः कथंभूतम्। निजमहिमनिर्वासिततमः निजमहिम्ना स्वमाहात्म्येन निर्वासितं नाशितं तमो येन तत्। स्वप्रकाशमित्यर्थः। 'यस्य भासा सर्वमिदं विभाति' 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमि'त्यादिश्रुतिस्मृतिभ्यामित्यर्थः।

पुनः कथंभूतम् । विशुद्धं मायामलरहितम् । नारायणतीर्थसरस्वतीभिरपि गङ्गैवाद्वितीयं ब्रह्मेत्युक्तम् । 'न नानेहास्तीति श्रुतिवचनजातैर्भगवती निरस्यैवाभासि स्वयमखिलभेदं सुरधुनि । चिदात्मैका नित्या चितिसुखसदाविष्कृतिरसि त्वदीयं मोक्षार्थं श्रयति जनता जीवनपद'मिति । अत्र शिष्यबुद्धिवैशद्याय किंचिदुच्यते—वेदोनाम ब्रह्मप्रतिपादकमपौरुषेयं प्रमाणवाक्यम् । स च मन्त्रब्राह्मणात्मकः । तत्र मन्त्रा नाम अनुष्ठानकारकभूतद्रव्यदेवताप्रकाशकाः । ते च ऋग्यजुःसामभेदात्त्रिधा । पादबन्धगायत्र्यादिछन्दोविशिष्टा ऋचः अग्निमीळ इत्याद्यः । गीतिविशिष्टास्ता एव सामानि । उभयविलक्षणानि यजूंषि । ब्राह्मणमपि त्रिविधं विधिरूपं अनुवादरूपं उभयविलक्षणं चेति मीमांसाग्रन्थेभ्योऽवधेयम् । इह विस्तरभयान्न तन्यत इति दिक् ॥१०

इदानीं निखिललोकानां साधारण्येनात्यन्तदुष्प्रापविष्णुपददात्री त्वं न केनापि तुलनीयेत्याह—

**महादानैर्ध्यानैर्बहुविधवितानैरपि च यन्**
**न लभ्यं घोराभिः सुविमलतपोराशिभिरपि ।**
**अचिन्त्यं तद्विष्णोः पदमखिलसाधारणतया**
**ददाना केनासि त्वमिह तुलनीया कथय नः ११**

महादानैरिति । भो भागीरथि, अखिलसाधारणतया अखिलानां सर्वलोकानां साधारणता साधारण्यं नतु न्यूनाधिक्यम् तया । विष्णोर्नारायणस्य । 'विष्णुर्नारायणः कृष्णः' इत्यमरः । पदं चरणं वैकुण्ठस्य स्थानं वा । यद्वा विष्णोः पदं

वस्तु । विष्णुरूपवस्त्वित्यर्थः । अस्मिन्पक्षे राहोः शिर इतिवत्षष्ठी । तथाच कोशः 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वि'ति । ददाना दात्री । 'न लोके'ति षष्ठीनिषेधात्पदमिति द्वितीया । एतादृशी त्वं इह लोके केन तुलनीया उपमेयासीति नः अस्मान् । कथय वद । तादृशस्य कस्याप्यभावान्न केनाप्युपमेयासीति भावः । यद्वा केन ब्रह्मणा तुलनीयासि । अपितु नेत्यर्थः । ब्रह्मणोऽपि तादृशसामर्थ्याभावादिति भावः । 'तुल निष्कर्ष' इति धातोरनीयर् । शिष्णुरूपं वस्त्विवति पक्षे सारूप्यमुक्तिः प्रतीयते । तदुक्तं श्रीमच्छंकराचार्यैः 'त्वन्मध्याद्भृगुलाञ्छनो गरुडगः पीताम्बरो निर्गतः', 'नारायणं वा शिवं' इति वेति । तत्किम् । यद्विष्णुपदं महादानैः गजाश्वशिबिकातुलादिरूपैः । ध्यानैः चित्तैकाग्र्यतया चिन्तनैः । अपिच बहुविधवितानैरपि च बहुविधा अनेकप्रकारा ये वितानाः क्रतवः । 'क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके' इत्यमरः । बहुविधा ये विताना उल्लोचास्तैः । 'अस्त्री वितानमुल्लोच'इत्यमरः । घोराभिः भयंकराभिः परमकष्टसाध्याभिर्वा । सुविमलतपोराशिभिरपि सुविमलानि निर्मलानि नतु मारणोच्चाटनवशीकरणजनकानि तादृशानि यानि तपांसि तेषां राशयः समूहाः तैरपि न लभ्यं न प्राप्यम् । अर्हार्थकलभधातोः 'पोरदुपधा'दिति यत् । पुनस्तत्किम् । अचिन्त्यं चिन्तानर्हम् । वागगोचरमिति भावः ॥ ११ ॥

इदानीं दर्शनमात्रेण नृणां संसारभयहर्त्रीं त्वां शिवः पार्वत्यनुरोधत्यागपूर्वकं निरन्तरं शिरसि बिभर्तीत्याह—

नृणामीक्षामात्रादपि परिहरन्त्या भवभयं
शिवायास्ते मूर्तेः क इह महिमानं निगदतु ।
अमर्षम्लानायाः[1] परममनुरोधं गिरिभुवो
विहाय श्रीकण्ठः शिरसि नियतं धारयति याम्

नृणामिति । भो भागीरथि, ते तव मूर्तेः तनोः महिमानं परमदुर्घटकार्यकर्तृत्वरूपं माहात्म्यं इह लोके कः निगदतु वदतु । अपितु न कोऽपीत्यर्थः । माहात्म्यबाहुल्येन कस्यापि वाणीप्रसराभावादिति भावः । कथंभूताया मूर्तेः । ईक्षामात्रादपि ईक्षैव ईक्षामात्रमिति मयूरव्यंसकादित्वात्समासः । 'मात्रं कार्त्स्न्येऽवधारणे' इति कोशादवधारणं मात्रशब्दार्थः । तस्मादपि नृणाम् । 'नृचे'त्यस्य वैकल्पिकत्वाद्दीर्घाभावः । भवभयं भवात्संसाराद्भयं हरन्त्याः । तदुक्तम् 'गङ्गे त्वद्दर्शनान्मुक्तिर्न जाने स्नानजं फल'मिति । पुनः कथंभूतायाः । शिवायाः शिवयतीति शिवा । 'तत्करोती'ति ण्यन्तात्पचाद्यचि टाप् । तस्याः । यद्वा शिवं कल्याणं अस्ति यस्याः सा तस्याः । यद्वा शिवो महादेवो भर्तृत्वेन अस्त्यस्या इति, शिवो मोक्षोऽस्त्यस्या इति पक्षचतुष्टयेऽपि अर्शआद्यच् । 'शिवो मोक्षे महादेवे सुखे क्षेमे जले शिव'मिति शाश्वतः । श्रीकण्ठः कपर्दी । 'उग्रः कपर्दी श्रीकण्ठः' इत्यमरः । अमर्षम्लानायाः अमर्षेन कोपेन । 'कोपक्रोधामर्षरोष' इत्यमरः । म्लाना ग्लाना तस्याः एतादृशः गिरिभुवः गिरेर्हिमाचलात् भवतीति गिरिभूः पार्वती । क्विप् । तस्याः परममुत्कृष्टं अनुरोधं

---

१ ग्लानाया इति पाठः ।

अनुसरणं विहाय त्यक्त्वा यां गङ्गां शिरसि नियतं निरन्तरं यथा स्यात्तथा धारयति बिभर्ति। स्वार्थे णिच्। सपत्नीभूतगङ्गाया मस्तकधारणेन जातकोपाया अपि पार्वत्याः सान्त्वनादिकं विहाय अधिकगुणवतीं त्वामेव शिरसि बिभर्तीति भावः। लोकेऽपि सर्वत्राधिकगुणवतो हीरकस्य मस्तकधारणं प्रसिद्धमेव ॥ १२ ॥

इदानीमुन्मत्तादिभिरपि विनिन्द्यानि परिहार्याणि अवाच्यानि यानि पापानि तन्नाशिनी त्वमेवेत्याह—

**विनिन्द्यान्युन्मत्तैरपि च परिहार्याणि पतितै-**
**रवाच्यानि व्रात्यैः सपुलकमपास्यानि पिशुनैः ।**
**हरन्ती लोकानामनवरतमेनांसि कियतां**
**कदाप्यश्रान्ता त्वं जगति पुनरेका विजयसे १३**

विनिन्द्यानीति । भो गङ्गे, उन्मत्तैरविचारकारिभिः विशेषेण निन्द्यानि निन्दितुं योग्यानि । अपिच पतितैरप्रायश्चित्तादिभिः परिहार्याणि त्याज्यानि । व्रात्यैः गर्भाधानादिसंस्कारहीनैः । 'व्रात्यः संस्कारहीनः स्यादि'त्यमरः । अवाच्यानि वक्तुमयोग्यानि । पिशुनैः कर्णेजपैः । 'कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खलः' इत्यमरः । सपुलकं सरोमाञ्चं यथा स्यात्तथा अपास्यानि त्याज्यानि । एतादृशानि कियतां किं परिमाणमेषां ते कियन्तः तेषाम् । 'किमः संख्यापरिमाणे डतिचे'ति वतुप् । 'किमिदंभ्यां वो घः' । बहूनामित्यर्थः । लोकानां एनांसि यन्त्यधो एभिस्तानि, यन्ति गच्छन्ति प्रायश्चित्तादिना वा तानि एनांसि कलुषाणि । 'इण आगसी'-

त्यसुन् । 'कलुषं वृजिनैनोघमि'त्यमरः । हरन्ती नाशयन्ती एका सती कदापि कस्मिन्नपि काले अश्रान्ताऽखिन्ना एतादृशी त्वं जगति विश्वस्मिन् विजयसे सर्वोत्कर्षेण वर्तसे । लोके कश्चन कदाचित् एवं कार्यं यदि करोति तदा श्रान्तो भवति । बहुभिर्वा एकं महत्कार्यं कृतं चेत् सर्वेऽपि श्रान्ता भवन्ति । त्वं तु असहायाऽद्वितीया सर्वेषां पापानि निरन्तरं हरन्त्यपि न श्रान्तेति ममापि पापं दूरीकरिष्यस्येवेति भावः ॥ १३ ॥

इदानीं तव गुणानामेवायं दोषः यत्पृथिवीतले शोकनाशाय स्वर्लोकात्पतन्त्यास्तव निर्लोभोऽपि शिवः कपर्दस्थापनमिषेण प्रतिग्रहं चकारेत्याह—

स्खलन्ती स्वर्लोकादवनितलशोकापहृतये
जटाजूटग्रन्थौ यदसि विनिबद्धा पुरभिदा ।
अये निर्लोभानामपि मनसि लोभं जनयतां
गुणानामेवायं तव जननि दोषः परिणतः १४

स्खलन्तीति । भो भागीरथि, अवनितलशोकापहृतये अवन्याः पृथिव्याः तलं स्वरूपम् । 'अधःस्वरूपयोरस्त्री तलमि'त्यमरः । तत्र यः शोकः तस्यापहृतिर्नाशः तस्यै । अपहृतिं कर्तुमित्यर्थः । स्वर्लोकात् स्खलन्ती पतन्ती त्वं पुरभिदा शिवेन जटाजूटग्रन्थौ जटाजूटस्य कपर्दस्य ग्रन्थिस्तत्र यत् विनिबद्धा विशेषेण निरन्तरं बद्धासि । उपसर्गद्वयं कदापि अन्यत्र गमनाभावं बोधयति । अये जननि, निर्लोभानामपि निर्गतः लोभो येषां तेषामपि मनसि चित्ते लोभं इच्छां जनयतां कुर्वतां तव

गुणानामेव दयादाक्षिण्यादीनामेवायं दोषः परिणतः प्रसृतः। निर्लोभतया कदाप्यप्रतिग्रहकर्ता शिवः तव गुणलोभवशेनैव अपूर्वं प्रतिग्रहं चकारेति भावः॥ १४॥

इदानीं सर्वेषां रक्षणक्षमं परमौषधं त्वमसीत्याह—

जडानन्धान्पङ्गून्प्रकृतिबधिरानुक्तिविकलान्
ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणीन्।
निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपततो
नरानम्ब त्रातुं त्वमिह परमं भेषजमसि॥१५॥

जडानिति। भो अम्ब, इह कलौ जडान् अज्ञान्। क्रियासु मन्दानित्यर्थः। 'जडोऽज्ञः' इत्यमरः। अन्धान् चक्षुरिन्द्रियहीनान्। पङ्गून्पादगतिहीनान्। प्रकृतिबधिरान् प्रकृत्या स्वभावेन बधिरान् श्रोत्रेन्द्रियहीनान्। शब्दश्रवणासमर्थानित्यर्थः। उक्तिविकलान् उक्तिभिर्वचनैर्विकला हीनाः तान्। 'पूर्वसदृशे'ति समासः। 'व्याहार उक्तिर्लपितं भाषितं वचनं वचः' इत्यमरः। वचधातोः क्तिनि 'वचिस्वपी'ति संप्रसारणम्। ग्रहग्रस्तान् ग्रहैरादित्यादिनवग्रहैर्ग्रस्ताः कवलिताः। कृतपीडा इति यावत्। तदुक्तं ज्योतिःशास्त्रे—'स्वर्क्षाच्चन्द्रखलास्त्रिखारिषु शुभाः सप्ताद्यगोऽब्जः पुनश्चापुत्राद्व्ययधर्ममृत्युषु कविः स्वास्तत्रिकोणे गुरुः। सौम्यो व्यन्त्यसमेऽखिला भवगताः शुक्रे नवेषुद्विगश्चन्द्रोऽथो निजभाद्युभं नवहृतं त्र्यद्रीषुशेषं न सत्॥' इति। अस्ताखिलदुरितनिस्तारसरणीन्। अखिलानि च तानि दुरितानि च पापानि तेषां निस्तारणं नाशनं तस्य सरणिः प्रायश्चित्ताद्याचरण-

मार्गः अस्ताऽविद्यमाना अखिलदुरितनिस्तारसरणिर्येषां तान्। पापबाहुल्येनाविद्यमानप्रायश्चित्तादीनित्यर्थः। निलिम्पैर्देवैः। 'अनुपसर्गाल्लिम्पे'ति सूत्रस्थेन 'नौलिम्पेः संज्ञाया'मितिवार्तिकेन शः। मुक्तान् स्वहस्तेन परित्राणाभावात्। अपिच निरयान्तः निरयस्य नरकस्य अन्तः मध्ये। 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रिया'मित्यमरः। निपततः नितरां पतन्ति ते निपतन्तः तान् एतादृशान् नरान् मनुष्यान् त्रातुं त्वं परमं उत्कृष्टं भेषजं औषधमसि। 'भेषजौषधभैषज्यानि' इत्यमरः। एवंच सर्वभेषजं त्वं सर्वान्तर्गतस्य ममापि भेषजं भविष्यस्येवेति भावः ॥१५॥

इदानीं कपिलमुनिनिर्दग्धाः सगरजाः सगरपुत्राः त्वत्संबन्धवशात् स्वर्गे दिव्यदेहधारिणः अद्यापि तव महिमानं अहो धन्या जाह्नवी निधनं गता अपि वयं यत्सङ्गवशादीदृशा जाता इत्याकारकं गायन्तीत्याह—

स्वभावस्वच्छानां सहजशिशिराणामयमपा-
मपारस्ते मातर्जयति महिमा कोऽपि जगति।
मुदा यं गायन्ति द्युतलमनवद्यद्युतिभृतः
समासाद्याद्यापि स्फुटपुलकसान्द्राः सगरजाः॥

स्वभावेति। भो मातः, स्वभावस्वच्छानां स्वभावेन निसर्गेण नतु कृत्रिमेण। 'स्वरूपं च स्वभावश्च निसर्गः' इत्यमरः। स्वच्छानां निर्मलानां सहजमनायासेन मणिकाद्यसंक्षेपेण शिशिराणां शीतलानाम्। उक्तंच कालिदासेन 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इति। एतादृशीनां ते अपां वाराम् 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः। अपारः अमर्यादः अयं कोऽपि विल-

क्षणः महिमा माहात्म्यं जगति जयति सर्वोत्कर्षेण वर्तते । सगरजाः सगरराजपुत्राः अनवद्यद्युतिभृतः सन्तः । न अवद्या गर्ह्या अनवद्या स्तुत्या । 'अवद्यपण्य–' इति सूत्रेण गर्ह्यायां अवद्येति निपातितम् । तादृशी चासौ द्युतिश्च तां बिभ्रति ते एतादृशाः सन्तः । अतएव स्फुटपुलकसान्द्राः सन्तः स्फुटाः प्रकटा ये पुलकाः रोमाञ्चाः तैः सान्द्राः निबिडाः सन्तः महिमानं अद्यापि मुदा प्रीत्या गायन्ति । वदन्तीत्यर्थः । किं कृत्वा । द्युतलं दिवस्तलं 'दिव उत्' इत्युत् । 'द्योदिवौ द्वे स्त्रियाम्' इत्यमरः । समासाद्य अधिष्ठित्य । सगरेण हि अश्वमेधकरणाय अश्वो विनिर्मुक्तः । तत्संरक्षणाय स्वपुत्रा नियुक्ताः । स चाश्वः इन्द्रेण चौर्येण पाताले नीतः । सगरपुत्रा अपि तदानयनाय तत्र गताः ते सर्वे कपिलेन निर्दग्धाः पश्चात् भगीरथेन स्वर्गात् गङ्गामानीय पाविता इति स्पष्टं रामायणादौ ॥ १६ ॥

इदानीं स्वल्पपापिनां दोषापनुत्तये त्रिजगति गोदावर्यादीनि बहूनि तीर्थानि सन्ति । अतीतप्रायश्चित्तानां तु दोषहरणे त्वत्सदृशी त्वमेव समर्थेत्याह—

**कृतक्षुद्रै[1]नस्कानथ झटिति संतप्तमनसः**
**समुद्धर्तुं सन्ति त्रिभुवनतले तीर्थनिवहाः ।**
**अपि प्रायश्चित्तप्रसरणपथातीतचरितान्**
**नरान्[2]दूरीकर्तुं त्वा[3]मिव जननि त्वं विजयसे १७**

१ क्षुद्राघौघान् इति पाठः । २ ऊरीकर्तुं इति पाठस्तत्राङ्गीकर्तुमित्यर्थः ।
३ त्वमिह खलु जागर्षि जगति इति पाठः ।

कृतेति। भो जननि, कृतक्षुद्रैनस्कान् कृतानि क्षुद्राणि अल्पानि पलाण्डुभक्षणादीनि एनांसि पापानि यैस्ते तान्। 'शेषाद्विभाषा' इति कप्। अथ पापाचरणानन्तरं झटिति शीघ्रं संतप्तमनसः संतप्तं पश्चात्तापयुक्तं मनो येषां ते तान् एतादृशान्नरान् समुद्धर्तुं आचरितपापात् दूरीकर्तुं त्रिभुवनतले त्रयाणां भुवनानां समाहारस्त्रिभुवनम्। 'तद्धितार्थ' इति समाहारे द्विगुः। पात्रादित्वात्स्त्रीत्वाभावः। तस्य तलं तत्र तीर्थनिवहाः तीर्थानां गोदावर्यादितीर्थानां निवहाः समूहाः सन्ति वर्तन्ते। भो जननि, प्रायश्चित्तप्रसरणपथातीतचरितान् प्रायश्चित्तस्य पापनाशनसमर्थधर्मविशेषस्य प्रसरणमाचरणं तस्य पन्था मार्गः। 'वाटः पन्थाश्च मार्गश्च' इति त्रिकाण्डमण्डनः। 'ऋक्पूरब्धूः—' इति समासान्तोऽप्रत्ययः। प्रायश्चित्तप्रसरणपथान् अतीतं अतीत्य गतं चरितं येषां ते। तानपि बहुकालं बुद्धिपूर्वकं महत्पापाचरणेनाविद्यमानप्रायश्चित्तानपीत्यर्थः। उक्तं च मुद्गलाचार्यैः—'सुकृतिन ईषत्पापे प्रायश्चित्तं रघूत्तम प्रोक्तम्। अपयाति मामुदीक्ष्य प्रायस्तदपीह गौरिव व्याघ्रम्' इति। एतादृशानपि नरान् दूरीकर्तु आचरितपापादुद्धर्तुं त्वमिव त्वत्सदृशी त्वमेव विजयसे। अत्रोपमानोपमेयत्वं गङ्गाया एव। तत्फलं तु अन्या त्वत्सदृशी नास्तीति। अतएवात्रानन्वयालंकारः। तदुक्तम्—'उपमानोपमेयत्वं यदेकस्यैव वस्तुनः। इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः॥' इति। प्रायश्चित्तशब्दः 'प्रायस्य चित्तिचित्तयोः' इति गणपठितसूत्रेण सुटि निष्पन्नः स च रूढ्या योगेन च पापनाशनसमर्थं विशेषधर्ममाचष्टे।

प्रायश्चित्तशब्दश्चायं पापक्षयार्थे नैमित्तिके कर्मविशेषे रूढ इत्याहुः संप्रदायविदो निबन्धकारादयः । योगस्त्वाङ्गिरसा दर्शितः–'प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तं प्रायश्चित्तं तदुच्यते ॥' अस्यार्थः–अनुष्ठितेन द्वादशवार्षिकादिना अवश्यं पापं निवर्तत इति विश्वासो निश्चयः तेन संयुक्तं व्रतानुष्ठानलक्षणं तपः प्रायश्चित्तमित्यलं विस्तरेण ॥ १७ ॥

इदानीमनेकगुणविशिष्टत्वेन पापहरणक्षमं तव वपुर्मम पापं नाशयत्विति प्रार्थयते—

**निधानं धर्माणां किमपि च विधानं नवमुदा**
**प्रधानं तीर्थानाममलपरिधानं त्रिजगतः ।**
**समाधानं बुद्धेरथ खलु तिरोधानमधियां**
**श्रियामाधानं नः परिहरतु तापं तव वपुः १८**

निधानमिति । भो जननि, धर्माणां वेदेन प्रयोजनमुद्दिश्य विधीयमानार्थानाम् । तदुक्तं जैमिनिना–'चोदनालक्षणोऽर्थो धर्मः' इति चोदनालक्षणार्थो धर्मास्तेषां निधानं स्थानम् । निधीयते स्थाप्यते यस्मिन्निति धाधातोः 'करणाधिकरणयोश्च' इति ल्युट् । च पुनः नवमुदां नवाश्च ता मुदश्च तासां नूतनहर्षाणां किमपि विधानं जनकम् । गङ्गादर्शनेन विलक्षणा हर्षा जायन्त इत्यनुभवसिद्धम् । 'कर्तृकर्मणोः' इति कर्मणि षष्ठी उभयत्र । च पुनः तीर्थानां प्रधानम् । च पुनः त्रिजगतः त्रयाणां जगतां समाहारां त्रिजगत् तस्य । 'तद्धितार्थ'इति

समाहारे द्विगुः । अमलपरिधानं अमलं निर्मलं च तत्परिधानं चामलपरिधानं अधोंशुकम् । 'अन्तरीयोपसंव्यानपरिधानान्यधोंशुके' इत्यमरः । यथा लोके कस्यचिद्वसनहीनस्य न शोभा तथा एतद्विना त्रिजगत इत्याकूतम् । च पुनः बुद्धेर्मनीषायाः 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः । समाधानम् । नानादुष्टकल्पनानाशकमित्यर्थः । अथानन्तरं अधियां निर्बुद्धीनां तिरोधानं अपिधानम् । तेषामदृश्यमिति भावः । 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः । अथ श्रियां समृद्धीनामाधानं स्थापकम् । मोक्षादिलक्ष्मीसंपादकमित्यर्थः । एतादृशगुणविशिष्टं तव वपुः शरीरम् । 'गात्रं वपुः संहननं शरीरम्' इत्यमरः । नः अस्माकं तापं परिहरतु ॥ १८ ॥

इदानीं कार्यासक्ततया यस्तव वियोगो जातः अयं ममैवापराध इत्याह—

पुरो धावंधावं द्रविणमदिराघूर्णितदृशां
 महीपानां नानातरुणतरखेदस्य नियतम् ।
ममैवायं मन्तुः स्वहितशतहन्तुर्जडधियो
 वियोगस्ते मातर्यदिह करुणातः क्षणमपि १९

पुर इति । भो मातः, मातृत्वेनावश्यमपराधः सोढव्य इत्याकूतम् । अयं ममैव । एवो निश्चयार्थः । मन्तुः अपराधः । अस्तीति शेषः । कोऽसावित्याकाङ्क्षायामाह । इहेति । इह लोके तव वियोगः स्नानाद्यसंबन्धः यत् अभूत् अतः कारणात् क्षणमपि क्षणमात्रमपि करुणा दया त्वया मयि कर्तव्येति शेषः ।

'कारुण्यं करुणा घृणा' इत्यमरः । अपराधभवने मूलमाह । कथंभूतस्य मम । द्रविणमदिराघूर्णितदृशां द्रविणमेव मदिरा उन्मादकारित्वात्, यद्वा द्रविणं च मदिरा च ताभ्यां घूर्णिते घूर्णनयुक्ते । भ्रमिते इत्यर्थः । तादृश्यौ दृशौ येषां ते । 'दृक् दृष्टी च' इत्यमरः । नाना अनेकेषाम् । अव्ययत्वात् षष्ठ्या लुक् । एतादृशानां महीपानां महीं पान्ति ते महीपाः राजानः तेषां अग्रे नियतं नियतमेव धावंधावं धावित्वाधावित्वा 'धावु गतिशुद्ध्योः' इति धातोः 'आभीक्ष्ण्ये णमुल् च' इति णमुलि द्वित्वम् । तरुणतरखेदस्य अतिशयेन तरुणः तरुणतरः तादृशः खेदः श्रमो यस्य तस्य । यद्वा नानातरुणतरखेदस्येत्येकं पदम् । नाना अनेकविषयः तरुणतरः खेदो यस्य । पुनः कथंभूतस्य । स्वहितशतहन्तुः स्वस्यैव हितानि पथ्यानि तेषां शतं तस्य हन्ता नाशकः तस्य । अतएव पुनः कथंभूतस्य । जडधियः जडा धीर्यस्य तस्य ॥ १९ ॥

पूर्वं दया विधेयेत्युक्तं, इदानीं किंविषयिणी दयेत्याकाङ्क्षायां तव जलं मम पुनर्भवनमेव दूरीकरोत्विति प्रार्थयते—

**मरुल्लीलालोलल्लहरिलुलिताम्भोजपटली-**

**स्खलत्पांसुव्रातच्छुरणविसरत्कौङ्कुमरुचि ।**

**सुरस्त्रीवक्षोजक्षरदगरुजम्बालजटिलं**

**जलं ते जम्बालं मम जननजालं जरयतु २०**

मरुदिति । भो मातः, ते तव जलं मम जगन्नाथस्य जननजालं जननस्य जन्मनः । 'जनुर्जननजन्मानी'त्यमरः । तस्य

जालं समूहः तत् । 'जालं समूह आनायः' इत्यमरः । जरयतु नाशयतु । 'जॄ वयोहानौ' स्वार्थणिजन्तः । 'जनी जॄष्–' इति मित्वे 'मितां ह्रस्वः' इत्युपधाह्रस्वः । कथंभूतं जलम् । मरुल्लीलालोलल्लहरिलुलिताम्भोजपटलीस्खलत्पांसुव्रातच्छुरणविसरत्कौङ्कमरुचि । मरुतः वायोः लीला विलासः तेन लोलन्त्यश्चञ्चला या लहर्यः वीचयः ताभिः लुलितानि लोलानि यानि अम्भोजानि कमलानि तेषां पटली समूहः तस्याः स्खलन्तः पतन्तो ये पांसवः रजांसि तेषां व्रातः समूहः तस्य छुरणं अङ्गलेपः तेन विसरन्ती प्रसरणशीला तादृशी कौङ्कमरुचिर्दीप्तिर्यस्य तत् । कमलरजःपतनेनात्यन्तमारक्तमिति भावः । पुनः कीदृशम् । सुरस्त्रीवक्षोजक्षरदगरुजम्बालजटिलं सुराणां इन्द्रादिदेवानां स्त्रियः इन्द्राण्यादयः तासां वक्षोजाः स्तनाः तेभ्यः क्षरन् पतन् यः अगरुजम्बालः कृष्णचन्दनपङ्कः । 'वंशिकागरुराजार्हे' इत्यमरः । 'निषद्वरस्तु जम्बालः पङ्कोऽस्त्री' इत्यमरः । तेन जटिलं सजटम् । जटाशब्दात्तुदादित्वादिलच् । पुनः कथंभूतम् । जम्बालं जम्बालः पङ्कः अस्ति यस्मिन् तत् । यद्वा जम्बालः शैवालं अस्ति यस्मिन् । यद्वा जम्बालाः मदनद्रुमाः । धत्तूरवृक्षा इत्यर्थः । ते सन्त्यस्मिन् तत् । तथाच कोशः 'जम्बालः शैवले पङ्के जगले मदनद्रुमे' इति पक्षत्रयेऽपि जम्बालशब्दान्मत्वर्थीयोऽर्शआद्यच् । मरुल्लीलालोलल्लहरीत्यत्र संहितायां 'तोर्लि'ति लः । कौङ्कमरुच्योः समासं कृत्वा पश्चाद्विसरन्तीशब्देन समासे पुंवद्भावः । 'तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः' इति द्विरूपकोशात्तालव्योपि पांशुशब्दः २०

इदानीमुत्पत्तिस्थाननिवासस्थानव्यापारसौष्ठवेन जगदपेक्षया तवोत्कर्षो वर्तत इत्याह—

**समुत्पत्तिः पद्मारमणपदपद्मामलनखा-**
**न्निवासः कन्दर्पप्रतिभटजटाजूटभवने ।**
**अथायं व्यासङ्गो हतपतितनिस्तारणविधौ**
**न कस्मादुत्कर्षस्तव जननि जागर्ति जगति २१**

समुत्पत्तिरिति । भो जननि, जगतः विश्वस्मात्तवोत्कर्षः आधिक्यं कस्माद्धेतोर्न जागर्तु नास्ताम् । अपितु सर्वस्माद्धेतोरुत्कर्षो वर्तत इत्यर्थः । उत्कर्षप्रतिपादकहेतूनाह—समुत्पत्तिरिति । तव समुत्पत्तिः सम्यगुत्पत्तिः उद्भवः पद्मारमणपदपद्मामलनखात् पद्मायाः लक्ष्म्याः 'लक्ष्मीः पद्मालया पद्मा' इत्यमरः । रमणः पतिः विष्णुः तस्य पदं चरणकमलं तस्यामलनखः तस्माद्भवति । 'जनिकर्तुः' इत्यपादानत्वम् । तव निवासस्थितिः कन्दर्पप्रतिभटजटाजूटभवने कन्दर्पस्यानङ्गस्य । 'कन्दर्पो दर्पकोऽनङ्गः' इत्यमरः । प्रतिभटः प्रतिपक्षी शिवः तस्य जटाजूटः कपर्दः स एव भवनं गृहं तत्र वर्तत इति शेषः । अथानन्तरं तवायं व्यासङ्गः उद्योगः हतपतितनिस्तारणविधौ हताः शत्रुभिः शस्त्रादिना मारिताः पतिताः प्रायश्चित्तिनः तेषां निस्तारणं उद्धारः तस्य विधिः करणं तत्र वर्तत इति शेषः । 'विधिर्विधाने दैवे च' इत्यमरः ॥ २१ ॥

---

१ ङ्गः पतितजननिस्तार इति पाठः ।

इदानीं हरशिरसि निवसन्त्याः विष्णुपदोद्भूतायास्तवोपमेया कापि नदी नास्तीत्याह—

नगेभ्यो यान्तीनां कथय तटिनीनां कतमया
पुराणां संहर्तुः सुरधुनि कपर्दोऽधिरुरुहे ।
कया[1] वा श्रीभर्तुः पदकमलमक्षालि सलिलै-
स्तुलालेशो यस्यां तव जननि दीयेत कविभिः

नगेभ्य इति । भो जननि, कविभिः पण्डितैः । 'संख्यावान्पण्डितः कविः' इत्यमरः । तव तुलालेशः तुलाया उपमायाः लेशः लवः । 'लवलेशकणाणवः' इत्यमरः । यस्यां दीयेत तादृशी का वर्तते । अपितु न कापीत्यर्थः । ननु कृष्णादयो बह्व्यो वर्तन्त इतिचेत्तत्राह—नगेभ्य इति । नगेभ्यः पर्वतेभ्यः 'नगोऽप्राणिष्वन्यतरस्या'मिति पाक्षिकत्वान्नञो नलोपाभावः । यान्तीनामागच्छन्तीनां मध्ये 'यतश्च निर्धारणम्' इति षष्ठी । कतमया तटिन्या पुराणां नगराणां संहर्तुर्दाहकस्य शिवस्य कपर्दः जटाजूटः अधिरुरुहे अध्यारूढः । नगेभ्यो यान्तीनां तटिनीनां मध्ये कया वा तटिन्या श्रीभर्तुर्विष्णोः पदकमलं चरणपङ्कजं सलिलैः अक्षालि धौतमिति त्वं कथय । अर्थात् अस्मान्प्रति वद । एवंच तत्कार्यकारणाभावात् काप्युपमेया नेति भावः । इदमेव मनसि निधाय त्वामहं शरणं गत इत्याकूतम् । अक्षालीत्यत्र 'चिण्भावकर्मणोः' इति कर्मणि चिण् । आदौ पूर्वार्धं योजयित्वा पश्चादुत्तरार्धं योज्यम् ॥ २२ ॥

---

१ कया च इति पाठः ।

इदानीमेवं जननि मनोरथदायिनि त्वयि सत्यां ब्रह्मादीनां प्रयोजनमेव नास्तीत्याह—

विधत्तां निःशङ्कं निरवधि समाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः ।
कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः
सवित्री कामानां यदि जगति जागर्ति भवती ॥

विधत्तामिति । भो जननि, जनयति विश्वं उत्पादयतीति जननी विश्वमाता तत्संबोधनम् । जगति विश्वस्मिन् कामानां मनोरथानाम् । कर्मणि षष्ठी । सवित्री उत्पादयित्री यदि जननी विश्वमाता त्वं जागर्ति अस्ति तर्हि विधिः विदधाति विश्वमिति विधिः ब्रह्मा । 'विधाञो वेध चे'इति वेधादेशोऽसिप्रत्ययश्च । निरवधिसमाधिं निर्गतः अवधिर्यामादिरूपा मर्यादा यस्य तादृशो यः समाधिः चित्तवृत्तिनिरोधः तं निःशङ्कं निर्गता शङ्का यस्मिन्कर्मणि यथा भवति तथा मयि निर्व्यापारे जगदुत्पत्तिः कथं भविष्यतीति शङ्कारहितमित्यर्थः । विधत्तां करोतु । हरिः हरति सर्वेषां दुःखमिति हरिः । 'अच इः' इत्यौणादिक इः । शेषे सुखं यथा स्यात्तथा शेताम् निद्रां करोतु । सुखमित्यनेन निद्राभङ्गजनकः जगद्रक्षणरूपोपाधिर्मास्त्वित्ति सूचितम् । हरः हरति विश्वमिति हरः । पचाद्यच् । शिवः अविरतं निरन्तरं यथा स्यात्तथा नृत्यतु नृत्यं करोतु । अविरतमित्यनेन मध्ये कार्यान्तरचित्ततया नृत्यविरामो मास्त्वित्ति सूचितम् । प्रायश्चित्तैः कृतं स्वहस्तेन

शुद्धिकरणाभावात्तानि व्यर्थानीति भावः । अथानन्तरं तपोदानयजनैः तपांसि कृच्छ्रचान्द्रायणादीनि, दानानि गजाश्वादीनि, यजनानि देवपूजायागादीनि तैरलम् । तैः साध्यं नास्तीति भावः । गम्यमानक्रियां प्रति कारकत्वात्तृतीया । अहो इत्याश्चर्ये । अनेकेषां कार्यमेकैव त्वं करोषीत्याश्चर्यम् ॥ २३ ॥

इदानीं अनाथ इत्यादिविशेषयुक्तोऽहं स्नेहार्द्रामित्यादिविशेषणयुक्तां त्वां प्राप्तोस्मि । अतस्त्वं स्वमहत्त्वयोग्यं कुर्वित्याह—

अनाथः स्नेहार्द्रां विगलितगतिः पुण्यगतिदां
पतन्विश्वोद्धर्त्रीं गदविगलितः सिद्धभिषजम् ।
सुधासिन्धुं तृष्णाकुलितहृदयो मातरमयं
शिशुः संप्राप्तस्त्वामहमिह विदध्याः समुचितं ॥

अनाथ इति । भो गङ्गे अयमहं शिशुः श्यति दिनेदिने कृशो भवतीति शिशुः शावकः । 'शः कित्सन्वच्च' इत्यादिसूत्रेण साधुः । 'पृथुकः शावकः शिशुः' इत्यमरः । मातरं जननीं त्वां प्राप्तोस्मि । इह विषये त्वं समुचितं सम्यगुचितं योग्यं विदध्याः कुरु । शरणागतं बालं मां मातृत्वान्मा त्यजेति भावः । कीदृशोऽहम् । कीदृशीं त्वाम् । अनाथः दीनः । स्वाम्यन्तराभाववानित्यर्थः । स्नेहार्द्रां स्नेहेन प्रीत्या आर्द्रां क्लिन्नाम् । 'आर्द्रं सान्द्रं क्लिन्नम्' इत्यमरः । पुनः कीदृशोऽहम् । कीदृशीं त्वाम् । विगलितगतिः विगलिता नष्टा गतिः गमनं यस्य सः । यद्वा विगलिता पापबाहुल्येन नष्टा गतिः पुण्यलोके

---

१ विदलित इति पाठः ।

गतिः गमनं यस्य सः पुण्यगतिदां पुण्येषु गतिः तां ददाति सा ताम् । यद्वा पुण्येषु पुण्यलोकेषु गतिदाम् । पु० । पतन् पतितः विश्वोद्धर्त्रीं उद्धारकर्त्रीम् । 'त्रिभुवनविधातुश्च कलहः' इतिवत् शेषषष्ठ्या समासः । एवं च विश्वान्तर्गतस्य ममोद्धारं करिष्यस्येवेति भावः । पु० । गदविगलितः गदैः आतङ्कैः । रोगैरित्यर्थः । विगलितः विशेषेण गलितः जर्जरितः । 'यक्ष्मान्तकगदाबाधाः शब्दाः पर्यायवाचकाः' इति । सिद्धभिषजं सिद्धौषधदाम् । सिद्धवैद्यरूपामित्यर्थः । 'रोगहार्यगदङ्कारो भिषग्वैद्यौ चिकित्सके' इत्यमरः । पु० । तृष्णाकुलितहृदयः तृष्णया पिपासया आकुलितं व्याप्तं हृदयं यस्य सः । सुधासिन्धुं सुधाया अमृतस्य सिन्धुं समुद्रम् । यद्वा सुधायाः सिन्धुं देशम् । यद्वा सुधायाः सिन्धुं नदीम् । तथाचामरः 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इति । अत्र परिकरालंकारः । साभिप्रायविशेषणानां सत्वात् । तदुक्तं कुवलयानन्दे—'अलंकारः परिकरः साभिप्राये विशेषणे' इति ॥ २४ ॥

इदानीं यदारभ्य तव कथा भूलोकमागता तदारभ्य यमनगरकोलाहलः शान्तः तद्दूता अपि दूरदेशं गताः विमानसङ्घश्च देववीथीर्विदलयतीत्याह—

विलीनो वै वैवस्वतनगरकोलाहलभरो
गता दूता दूरं क्वचिदपि परेतान्मृगयितुम् ।
विमानानां व्रातो विदलयति वीथीर्दिविषदां
कथा ते कल्याणी यदवधि महीमण्डलमगात्

विलीन इति । भो जननि, यदवधि यदारभ्य ते तव

कल्याणी कल्याणकारिका कथा महीमण्डलमगात् । 'इणो गा लुङि' इति गादेशे 'गातिस्था-' इति सिचो लुक् । तदारभ्य वैवस्वतनगरकोलाहलभरः वैवस्वतस्यान्तकस्य 'वैवस्वतोऽन्तकः' इत्यमरः । नगरं पुरं तत्र कोलाहलभरः कलकलसमूहः । 'कोलाहलः कलकलः' इत्यमरः । विलीनः विशेषेण लीनः गुप्तः । अभूदिति शेषः । विशेषश्च कस्मिन्नपि काले ईषदपि नास्तीति । पूर्वं तत्र पापिगमनेन तेषां ताडनात् कोलाहलः स्थितः इदानीं तु त्वत्कथाश्रवणमाहात्म्येन पापाभावात्कस्यापि तत्र गमनाभावेन ताडनाद्यभावादिति भावः । दूता अपि अर्थात् यमसंदेशहारका अपि 'स्यात्संदेशहरो दूतः' इत्यमरः । क्वचिद्देशे परेतान् शवान्मृगयितुं अन्वेषितुं दूरं गताः । यस्मिन्देशे त्वत्कथाश्रवणं नास्ति तत्र गता इत्यर्थः । ननु यमनगरगमनाभावे त्वत्कथाश्रवणिनः क्व गच्छन्तीति चेत्तत्राह—विमानानां विशिष्टं आनयन्ति ये ते, विगतं मानं वा येषां ते विमानाः व्योमयानानि । 'व्योमयानं विमानोऽस्त्री' इत्यमरः । तेषां व्रातो निकरः । 'स्तोमौघनिकरव्रात' इत्यमरः । दिविषदां दिवि सीदन्ति ते दिविषदो देवाः तेषाम् । 'शद्लृ विशरणगत्यवसादनेष्वि'ति धातोः 'सत्सूद्विष-' इति क्विप् 'हृद्युभ्यां च' इति ङेरलुक् सुषामादित्वात्षत्वम् । वीथीः मार्गान् । देवगमनमार्गानित्यर्थः । विदलयति विशेषेण दलयति विदारयति । त्वत्कथाश्रवणमाहात्म्येन सर्वेषां विमानैर्गमनात् वारंवारं विमानसंबाधात् खनितानिव करोतीत्यर्थः ॥ २५ ॥

इदानीं तव जलकणाः कामक्रोधजनितज्वरदग्धशरीरिणामस्माकं संतापशमनं कुर्वन्त्विति प्रार्थयते—

स्फुरत्कामक्रोधप्रबलतरसंजातजटिल-
ज्वरज्वालाजालज्वलितवपुषां नः प्रतिदिनम् ।
हरन्तां संतापं कमपि मरुदुल्लासलहरि-
च्छटाश्चञ्चत्पाथःकणसरणयो दिव्यसरितः २६

स्फुरदिति । दिव्यसरितः दिवि आकाशे भवा दिव्या 'भवार्थे दिगादित्वाद्यत्' सा चासौ सरिच्च तस्याः गङ्गायाः मरुदुल्लासलहरिच्छटाचञ्चत्पाथःकणसरणयः मरुतः वायोरुल्लासः संबन्धः गमनं वा । 'लस संश्लेषगमनयोः' इति धातोर्भावे घञ् । तेन या लहर्यः तासां याश्छटाः परम्पराः ताभिश्चञ्चत् उद्यत् यत्पाथः उदकम् । 'कबन्धमुदकं पाथः' इत्यमरः । तस्य कणाः तुषाराः तेषां सरणयः पङ्क्तयः नः अस्माकं कमपि औषधादिभिरसाध्यतयाऽपहर्तुमशक्यमपि संतापं हरन्तां नाशयन्तु । कथंभूतानां नः । प्रतिदिनं दिनेदिने इति प्रतिदिनं 'अव्ययं विभक्ति–' इति सूत्रे योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानीति चत्वारो यथाशब्दार्थाः तत्र वीप्सायां अव्ययीभावः । स्फुरत्कामक्रोधप्रबलतरसंजातजटिलज्वरज्वालाजालज्वलितवपुषां । कामोऽभिलाषः । 'कामः पञ्चशरः स्मरः' इत्यमरः । क्रोध अमर्षः । 'कोपक्रोधामर्षरोष' इत्यमरः । स्फुरन्तौ देदीप्यमानौ च तौ कामक्रोधौ च ताभ्यां प्रबलतरमतिशयितं संजात उत्पन्नः अतएव जटिलः शिखावान् एतादृशो यो ज्वरः तस्य ज्वाला अर्चयः तासां जालं समूहः तेन ज्वलितं दग्धं तादृशं वपुः शरीरं येषां तेषाम् ॥ २६ ॥

पूर्वं जलकणाः संतापं हरन्तामित्युक्तम्, इदानीं तापबाहुल्यात्कणानां कथं तत्संभवतीति चेत् तव जलानां संघातः अस्माकं तापशमनं करोत्विति प्रार्थयते—

इदं हि ब्रह्माण्डं सकलभुवनाभोगभवनं
तरङ्गैर्यस्यान्तर्लुठति परितस्तिन्दुकमिव ।
स एष श्रीकण्ठप्रविततजटाजूटजटिलो
जलानां संघातस्तव जननि तापं हरतु नः २७

इदमिति । भो जननि, श्रीकण्ठप्रविततटाजूटजटिलः प्रविततः विस्तृतः स चासौ जटाजूटश्च श्रीकण्ठस्य प्रविततजटाजूटः तेन जटिलः सजटः एतादृशः स एषः तव जलानां संघातः समुदायः नः अस्माकं तापं हरतु । स कः । यस्य जलानां संघातस्यान्तर्मध्ये सकलभुवनाभोगभवनं सकलभुवनानां चतुर्दशभुवनानां आसमन्तात् भोगः सुखं । 'भोगः सुखे स्त्र्यादिभृतौ' इत्यमरः । यद्वा सकलभुवनानां आभोगः परिपूर्णता । 'आभोगः परिपूर्णता' इत्यमरः । तस्य भवनं गृहम् एतादृशमिदं ब्रह्माण्डं तरङ्गैः सह । 'सहयुक्ते प्रधाने' इति सूत्रेण तृतीया । परितस्तिन्दुकमिव तिन्दुकस्य फलं तिन्दुकम् । 'तिन्दुकः स्फूर्जकः' इत्यमरः । 'टेंबुर्णी'ति भाषायां प्रसिद्धिः । लुठति । 'लुठ संश्लेषणे' तुदादिः । हीति आश्चर्ये । यस्मिंश्चतुर्दशभुवनाधारभूतं ब्रह्माण्डमपि स्थितम् सोऽपि शिवकपर्दे स्थित इत्याश्चर्यम् । अत्रोत्तरोत्तरमुत्कर्षस्य सत्वात् सारालंकारः । तदुक्तं अप्पय्यदीक्षितैः कुवलयानन्दे 'उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते' इति ॥ २७ ॥

इदानीं ननुरे तीर्थान्तराणि शिवादिदेवांश्च विहाय मामेव किं स्तौषीति चेत्तीर्थानि मदुद्धरणविधौ लज्जन्ते, शिवादयश्च कर्णे हस्तं स्थापयन्ति, त्वं तु मातृत्वेन दयया मां पुनाना तेषां पापनाशनाभिमानं नाशयसीत्याह—

त्रपन्ते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ
करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतयः ।
इमं तं मामम्ब त्वमियमनुकम्पार्द्रहृदये[1]
पुनाना सर्वेषामघमथनदर्पं दलयसि ॥ २८ ॥

त्रपन्त इति । भो अनुकम्पार्द्रहृदये अम्ब अनुकम्पा दया तया आर्द्रं हृदयं यस्याः सा तत्संबोधनं एतादृशि अम्ब जननि । अम्बत्वेन त्यागानर्हता । तं इमं तव समीपे वर्तमानं मां जगन्नाथं पुनाना पुनाति तच्छीला । ताच्छील्ये शानच् । पवित्रीकुर्वाणा इयं त्वं तेषां तीर्थादीनां अघमथनदर्पं अघस्य पापस्य मथनं नाशनं तस्य दर्पः गर्वः तं दलयसि विदारयसि । नाशयसीत्यर्थः । एतावत्कालपर्यन्तं तेषां परमगर्वः स्थितः वयं सर्वेषां पापनाशनं कुर्मः इदानीं तु मम परमपातकिनस्तद्धस्तेन उद्धारणाभावात्त्वया उद्धारणस्य कृतत्वात्तेषां गर्वो गत इति भावः । ननु तेषां हस्तेन किमित्युद्धरणं भवतीति चेत्तत्राह । तं कम् । इह यस्य उद्धृतिविधौ उद्धृतेः विधिः करणं तत्र । 'विधिर्विधाने दैवे च' इत्यमरः । तीर्थानि गोदावर्यादीनि त्वरितं यथास्यात्तथा महापातकिनो मम दर्शनसमय एवेति भावः । त्रपन्ते लज्जितानि भवन्ति । स्वहस्तेन महापातकिनो ममो-

१ त्वमपि करुणापूर्णहृदये इति पाठः ।

द्धरणाभावाल्लज्जेति भावः । पुनस्तं कम् । यस्योद्धारणविधौ कपालिप्रभृतयोऽपि कपाली प्रभृतिः आदिर्येषां ते विष्ण्वादयोऽपि कर्णे हस्तं कुर्वन्ति । स्थापयन्तीत्यर्थः । स्वहस्तेन एतस्योद्धृत्यभावात् । एतस्य किमपि न श्रोतव्यमित्याशयेन कर्णे हस्तन्यास इति भावः । करं कर्णे इत्येकवचनं तु द्वितीयकर्णेन श्रोतव्यं यद्धि स्वहस्तेन एतदीयं कार्यं भविष्यति चेत्करिष्यामः नो चेन्नेत्येतदर्थबोधनाय ॥ २८ ॥

इदानीमपरिमितसंशयेन पापाचरणे निवृत्तैश्चाण्डालानां समूहैरपि त्यक्तानां पापानामाकरैः पुनातु यत्नं कुर्वन्त्यास्तव स्तुतिं कर्तुं नरपशुरहं कथं शक्नुयामित्यहङ्कारपरिहरणव्याजेनाह—

श्वपाकानां व्रातैरमितविचिकित्साविचलितै-
र्विमुक्तानामेकं किल सदनमेनःपरिषदाम् ।
अहो मामुद्धर्तुं जननि घटयन्त्याः परिकरं
तव श्लाघां कर्तुं कथमिव समर्थो नरपशुः २९

श्वपाकानामिति । भो जननि, मां उद्धर्तुं परिकरं कटिबन्धं विवेकमारम्भं यत्नं वा । ‘प्रगाढगात्रैकबन्धे विवेकारम्भयो’रिति विश्वः । ‘यत्नारम्भौ परिकरौ’ इति त्रिकाण्डशेषः । घटयन्त्याः कुर्वन्त्याः तव श्लाघां स्तुतिं कर्तुं नरः पशुरिवेति व्याघ्रादित्वात्समासः । सर्वानविशेषेण पश्यतीति पशुः । हिताहितज्ञानशून्यः मूर्ख इति यावत् । एतादृशोऽहं कथमिव केनापि प्रकारेण समर्थः । अपितु न कथमपीत्यर्थः । मन्मतिमान्द्यात्तव गुणानामपारत्वाच्चेति भावः । अहो इत्याश्चर्ये ।

परमपातकिनं मां पुनातुं यत्नादिकं करोषीत्याश्चर्यम् । कथंभूतं माम् । अमितविचिकित्साविचलितैः अमिता अपरिमिता । बह्वीत्यर्थः । सा चासौ विचिकित्सा च इतः परं पातकानि कर्तव्यानि वा न वेत्याकारः संशयः । 'विचिकित्सा तु संशयः' इत्यमरः । यद्वा विचिकित्सा जुगुप्साख्यो बीभत्सरसस्थायीभावः । 'कित संशये' इति धातोः 'गुप्तिज्किद्भ्यः—' इति सनि 'सन्यङोः' इति द्वित्वे 'गुरोश्च हलः' इत्यप्रत्यये टाप् । अमितविचिकित्सायाश्चलितैः पातकान्निवृत्तैः एतादृशैः श्वपाकानां श्वानं पचन्ति ते श्वपाकाः चाण्डालाः । यद्यपि पचादिगणे श्वपचेति अजन्ते निपातितं तथापि न्यङ्क्वादिगणे श्वपाकशब्दस्य पाठात्पक्षे कर्मण्यणि कुत्वम् । 'निषादश्वपचावन्तेवासिचाण्डालपुल्कसाः' इत्यमरः । तेषां व्रातैः समूहैः नत्वेकेन द्वाभ्यां वा विमुक्तानां विशेषेण मुक्तानाम् । विशेषश्च मनःपूर्वकत्यक्तानां नतु लोकलज्जयेति एतादृशीनामेनःपरिषदां एनसां पापानां परिषदः सभाः । समूहा इत्यर्थः । तासामेकं अद्वितीयं सदनं गृहं । किल निश्चयेन प्रसिद्धौ वा आश्चर्ये वा । एतादृशमपि पापिनं मां पुनातुं उद्युक्तासीत्याश्चर्यम् ॥ २९ ॥

इदानीं कस्यचिन्महापातकिनः समुद्धरणेन जगत आश्चर्यं संपादनीयमिति तव महतीच्छा स्थिता सा एतावत्कालपर्यन्तं तादृशस्य कस्यचित् पातकिनः अभावान्नैव पूर्णा, अहं तु तादृशेच्छां सफलीकर्तुं प्राप्तोसि अतः ममोद्धरणेन स्वेच्छासाफल्यं कुर्विति प्रार्थयते—

न कोऽप्येतावन्तं खलु समयमारभ्य मिलितो
यदुद्धारादाराद्भवति जगतो विस्मयभरः ।
इतीमामीहां ते मनसि चिरकालं स्थितवती-
मयं संप्राप्तोऽहं सफलयितुमम्ब प्रणय नः ३०

नेति । भो अम्ब, एतावन्तं समयमारभ्य एतावत्कालपर्यन्तं कोऽपि कश्चन पातकी न मिलितः प्राप्तः । मयेति शेषः । आरात् यदुद्धारात् यस्योद्धारस्तस्मात् जगतः विस्मयभरः भवतीति ते मनसि चिरकालं बहुकालं स्थितवतीं तिष्ठतीति स्थितवती तामिमां पूर्वोक्तामीहामिच्छां सफलयितुं असफला सफला भवति तथा कर्तुम् । भृशादित्वात् 'क्यङ्मानिनोश्च' इति पुंस्त्वं तुमुन् । अयमहं जगन्नाथः संप्राप्तः । अस्मीति शेषः । नः अस्मान् प्रणय । पापं निरस्योत्तमां गतिं नयेत्यर्थः । 'उपसर्गादसमासेपि–' इति णत्वम् । अम्बेत्यनेन तव जननि त्वं चेत् अहं तव पुत्रः एवं च मातुरिच्छा सत्पुत्रेण मया सफलीकर्तव्येति सत्पुत्रधर्म एवायमिति सूचितम् ॥ ३० ॥

इदानीं ममानेकदुष्टगुणान् श्रुत्वा त्वां विना अन्यः कश्चन मम मुखनिरीक्षणमपि न कुर्यादित्याह—

श्ववृत्तिव्यासङ्गो नियतमथ मिथ्याप्रलपनं
कुतर्केष्वभ्यासः सततपरपैशून्यमननम् ।
अपि श्रावंश्रावं मम तु पुनरेवं गुणगणा-
नृते त्वत्को नाम क्षणमपि निरीक्षेत वदनम् ३१

श्ववृत्तीति । भो मातः, श्ववृत्तिव्यासङ्गः शुनः वृत्तिः

इतस्ततो भ्रमणं उच्छिष्टभक्षणाचरणादि तद्वत् व्यासङ्ग उद्योगः मया कृत इति शेषः। अथानन्तरं नियतं नियमेन मिथ्या-प्रलपनं असत्यानर्थकमपि भाषणं कृतम्। 'प्रलापोऽनर्थकं वचः' इत्यमरः। परमपुण्यशीलेन युधिष्ठिरेण सकृन्मिथ्योक्तमिति तज्जन्यपापवशादन्तरिक्षगस्तद्रथो भूमौ लग्न इति स्पष्टं महा-भारते। मया तु सत्यत्यागपूर्वकं सर्वदैव तत्कृतमिति मत्पाप-संख्यैव नेति आकूतम्। कुतर्केषु कुत्सितानां परस्त्रीगमनपर-गृहदारादिरूपकर्मणां तर्का ऊहाः तेषु। यद्वा कुत्सिताश्च ते तर्काश्च तेषु, यद्वा साक्षाद्ब्रह्मविद्याया अप्रतिपादकत्वेन पर-जयेच्छया च कुत्सितास्तर्काः तर्कशास्त्रग्रन्थाः तेषु अभ्यासोऽपि कृतः। सततपरपैशून्यमननमपि कृतम्। पिशुनस्य सूचकस्य भावः पैशून्यं द्वैजिह्व्यं परेषां पैशून्यं तस्य मननं चिन्तनं अभ्यासमिति यावत्। सततं निरन्तरं च तत् पैशून्यमननं च तदपि कृतम्। एवंप्रकारेण मम तु पुनर्गुणगणान् श्रावंश्रावं श्रुत्वाश्रुत्वा त्वदृते त्वां विना। 'अन्यारात्—' इति सूत्रेण ऋतेयोगे त्वदिति पञ्चमी। को नाम क्षणमपि वदनं अर्थात् मम मुखं निरीक्षेत पश्येत्। अपितु न कोऽपीत्यर्थः। तव तु मातृत्वेन दयाबाहुल्यादीदृशस्य मम मुखनिरीक्षणमावश्यकमेवेति भावः। तदुक्तं श्रीमच्छङ्कराचार्यैः 'कुपुत्रो जायेत क्वचिदपि कुमाता न भवति' इति ॥ ३१ ॥

इदानीं यस्य मनुष्यस्य नेत्राभ्यां परमरमणीयं तव शरीरं न दृष्टम्, यस्य कर्णाभ्यां च तव लहरीकोलाहलो न श्रुतः तस्य नेत्रे व्यर्थे कर्णौ च व्यर्थावित्याह—

विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं
न याभ्यामालीढा परमरमणीया तव तनुः ।
अयं हि न्यक्कारो [1]जननि मनुजस्य श्रवणयो-
र्ययो[2]र्नान्तर्यातस्तव लहरिलीलाकलकलः ॥३२॥

विशालाभ्यामिति । अत्र यस्य तस्येत्यध्याहारः । भो जननि, यस्य मनुजस्य मानवस्य । 'मनुजा मानवा नराः' इत्यमरः । याभ्यां नेत्राभ्यां परमरमणीया अतिसुन्दरी । अनेन दर्शने कारणं सूचितम् । एतादृशी तव तनुः शरीरं न आलीढा न सादरमवलोकिता तस्य मनुजस्य विशालाभ्यां आकर्णविस्तृताभ्यां आभ्यां नयनाभ्यां कृत्वा इह भूलोके किं फलम् । न किमपीत्यर्थः । यद्वा इह नालीढेति योजना । यस्य ययोः श्रवणयोः कर्णयोः अन्तर्मध्ये तव लहरिलीलाकलकलः लहरीणां लीला क्रीडा तया कलकलः कोलाहलः । 'कोलाहलः कलकलः' इत्यमरः । इह न यातः न प्राप्तः तस्य तयोः श्रवणयोः अयं श्रवणरूपः न्यक्कारः धिक्कारः । अस्त्विति शेषः । खलु निश्चयेन, यद्वा ययोः श्रवणयोरन्तर्मध्ये तव लहरिलीलाकलकलः न यातः ताभ्यां श्रवणाभ्यां कृत्वा किं फलम् । न किमपीत्यर्थः । परंतु अयं अदर्शनाश्रवणरूपो न्यक्कारो मनुजस्य नत्विन्द्रियाणाम् । इन्द्रियव्यापारस्य मनुष्यव्यापाराधीनत्वादिति भावः । तदुक्तम् 'करणं हि कर्तृक'मिति एतत्पक्षे यस्य तस्येति नाध्याहारः । ताभ्यामित्यस्य चाध्याहारः । अहं तु सर्वदैव तव

१ मनुजहतकस्य इति पाठः । २ ययोर्नान्तर्यातः इति पाठः ।

तनुं पश्यामि, लहरीशब्दं च शृणोमि, अतो मम नेत्रकर्णं न व्यर्थमित्याकूतम्। एवंच शीघ्रं मां पुनीहीति भावः। अत्र विनोक्तिध्वनिरलंकारः। त्वद्दर्शनं विना नयनयोस्त्वल्लहरिकोलाहलश्रवणं विना श्रवणयोश्च रमणीयत्वस्य फलप्रश्नधिक्काराभ्यां व्यञ्जनात्॥ ३२॥

इदानीं पुण्यवन्तो विमानैः सुरपुरं स्वच्छन्दं यान्ति, पापिनस्तु पराधीनाः सन्तो नरकमध्ये पतन्तीति कोटिद्वयं यत्र देशे त्वं नासि तत्र संभवति। यत्र तु निखिलपापनाशिनी त्वमसि तत्र द्वितीयकोटेरभावात् आद्यकोटिरेव संभवतीत्याह—

**विमानैः स्वच्छन्दं सुरपुरमयन्ते सुकृतिनः**
**पतन्ति द्राक्पापा जननि नरकान्तः परवशाः।**
**विभागोऽयं तस्मिन्नशुभमयमूर्तौ जनपदे**
**न यत्र त्वं लीलादलितमनुजाशेषकलुषा ३३**

विमानैरिति। भो जननि, सुकृतिनः पुण्यवन्तः। विमानैः सुरपुरं सुराणां देवानां पूर्नगरी ताम्। यद्वा सुराणां पुरं नगरं स्वर्गं स्वच्छन्दं यथा स्यात्तथा नतु तद्गुणादिवशेन अयन्ते गच्छन्ति। पापाः पापस्वरूपा जीवाः पापबाहुल्येन पापपुरुषयोस्त्रिमुनिव्याकरणमितिवदभेदः। यद्वा पापमस्ति येषां ते पापा इति मत्वर्थे अर्शआद्यच्। अतएव 'पापोऽहं पापकर्माहं' इत्यादिप्रयोगाः संगच्छन्त इति दिक्। पापमर्हन्तीति वा। परवशाः सन्तः यमनगरगणाधीनाः सन्त इत्यर्थः। नरकान्तः नरकस्यान्तर्मध्ये द्राक् शीघ्रम् यमनगरगमनसमय

एवेत्यर्थः । पतन्ति । भो मातः, अयं विभागः विषयव्यवस्था तस्मिन्नशुभमयमूर्तौ अशुभमयी अकल्याणप्रचुरा मूर्तिः तनुर्यस्य तस्मिन् । 'स्त्रियाः पुंवत्–' इति पुंवद्भावः । देशस्याशुभमयत्वं तत्र तव स्थितेरभावादेव । एतादृशे जनपदे देशे 'नीवृज्जनपदो देश–' इत्यमरः । अस्त्विति शेषः । तस्मिन् अशुभमयमूर्तौ जनपदे अयं विभाग इति योजना । तस्मिन्कस्मिन् । यत्र जनपदे दलितमनुजाशेषकलुषा मनुजानां मनुष्याणां अशेषकलुषं समस्तपापं दलितं नाशितं मनुजाशेषकलुषं यया सा एतादृशी त्वं नासि । यत्र त्वं दलितमनुजाशेषकलुषा सती नासीति वा योजना । एवं चार्थादेतादृशी त्वं यत्रासि तत्र कस्यापि पातकिनोऽभावात्सर्वेऽपि विमानैः सुरपुरं गच्छन्तीति आद्यकोटिरेव स्थितेति भावः । अत्र परिकरालंकारः । दलितमनुजाशेषकलुषेति साभिप्रायविशेषणस्य सत्त्वात् । तल्लक्षणं तु पूर्वमुक्तम् ॥ ३३ ॥

इदानीं समस्तमहापातकिनोपि मरणसमये त्वयि शरीरं त्यक्तवन्तः सन्त उत्तमलोकं गच्छन्तीत्याह—

**अपि घ्नन्तो विप्रानविरतमुशन्तो गुरुसतीः**
**पिबन्तो मैरेयं [1]पुनरपहरन्तश्च कनकम् ।**
**विहाय त्वय्यन्ते तनुमतनुदानाध्वरजुषा-**
**[2]मुपर्यम्ब क्रीडन्त्यखिलसुरसंभावितपदाः ३४**

अपीति । अत्र ये ते इत्यध्याहारः । पूर्वश्लोकात्पापा इत्यनुवर्तते । तथाचैवं योजना–भो अम्ब, ते पापाः पापिनः पुरुषाः

---

१ पुनरपि इति पाठः । २ मुपर्येव इति पाठः ।

अन्ते मरणसमये त्वयि तनुं शरीरं विहाय संत्यज्य अतनुदानाध्वरजुषां न तनु अल्पं इत्यतनु महत् तच्च तद्दानं च तेन येऽध्वराः सर्वस्वदक्षिणा यज्ञाः। 'यज्ञः सवोऽध्वरो यागः' इत्यमरः। यद्वा अतनूनि महान्ति दानानि येषु ते च ते अध्वराश्च। यद्वा अतनुदानानि चाध्वराश्च। यद्वा न तनुः कोपः तेन यानि दानानि अध्वराश्च। 'तनुः कोपे त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे' इति मेदिनी। तान् जुषन्ति सेवन्ते। कुर्वन्तीत्यर्थः। ते अतनुदानाध्वरजुषः तेषां उपरि उपरिलोके क्रीडन्ति। विहरति महादानयागप्राप्यलोकोपरितनलोकं गच्छन्तीत्यर्थः।तथाच गङ्गातनुत्यागादेवोत्तमलोकप्राप्तौ परमोत्कृष्टसाध्यमहादानयागेषु न किंचिदधिकं फलमिति भावः। ते के। ये पापाः विप्रानपि ब्राह्मणानपि अविरतं निरन्तरं यथास्यात्तथा। इदं सर्वक्रियान्वयि। घ्नन्ति ते घ्नन्तः। हनधातोः शतरि 'गमहन–' इत्युपधालोपः। 'न लोपे'ति षष्ठीनिषेधाद्विप्रानित्यादिद्वितीया। पुनः ते के। ये गुरुसतीः गृणाति बोधकं करोतीति गुरुः। 'कृग्रोरुच्च' इत्युणादिसूत्रेण 'गॄ शब्दे' इत्यस्मात् कुप्रत्ययः। उकारश्चान्तादेशः। तथा चोपनयनादर्वाचीनसंस्कारपूर्वकं वेदाध्यापको मन्त्रोपदेशकश्च गुरुः। 'स्यान्निषेकादिकृद्गुरुः' इत्यमरः। तस्य सत्यः पतिव्रताः स्त्रियः। 'सती साध्वी पतिव्रता' इत्यमरः। ताः उशन्तः वशन्ति इच्छन्ति ते उशन्तः। 'वश कान्तौ' अदादिः। तत्र हि कान्तिरिच्छेत्युक्तम्। तस्माच्छतरि 'ग्रहिज्या–' इति संप्रसारणम्। यद्वा गुरोः पितुः सतीः। मातृरित्यर्थः। यद्वा गुरोः श्रेष्ठपितृव्यभ्रातृमातृमातुलादेः सतीः। यद्वा गुरोः बृहस्पतेः

सतीः । तस्य एकस्त्रीत्वेपि जात्यभिप्रायेण बहुवचनमिति यथाकथंचिद्योज्यम् । तथाचानेकार्थकोशः 'गुरुः पिता गुरुः श्रेष्ठो गुरुः सुरपुरोहितः । दुर्वहोऽपि गुरुः प्रोक्तो गुरुः शिष्याभिसेवकः' इति । पुनस्ते के । ये मैरेयं सीधुम् । 'मैरेयमासवः सीधुः' इत्यमरः । पिबन्तः पानं कुर्वन्तः । पुनस्ते के । ये कनकं सुवर्णम् । 'सुवर्णं कनकम्' इत्यमरः । हरन्तः चोरयन्तः । कथंभूताः ते । अखिलसुरसंभावितपदाः अखिलसुरैः समस्तदेवैः संभावितं संभावनायुक्तं कृतम् । पूजितमिति यावत् । तादृशं पदं चरणं येषां ते । बहुवचनान्तेन समासः । यद्वा अखिलसुराणां संभावितं प्राप्तं तादृशं पदं स्थानं यैस्ते । 'सप्तमीविशेषणे–' इति ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिर्वा कर्तव्यः । संपूर्वकभूधातोर्णिजन्तात्क्तः । उपसर्गबलादुक्तार्थलाभः ॥ ३४ ॥

इदानीं महान् चोरः पुनरपि नराणां प्राणहारकोऽपि वायुः त्वल्लहरिबन्धमाहात्म्येन त्रिभुवनं पवित्रीकरोतीत्याह—

अलभ्यं सौरभ्यं हरति नियतं यः सुमनसां
क्षणादेव प्राणानपि विरहशस्त्रक्षत[1]भृताम् ।
त्वदीयानां लीलाचलितलहरीणां व्यतिकरात्
पुनीते सोऽपि द्रागहह पवमानस्त्रिभुवनम् ३५

अलभ्यमिति । भो अम्ब, सोऽपि परचौर्यपरप्राणहारित्वादिगुणयुक्तोऽपि पवमानः प्रभञ्जनः । 'पवमानः प्रभञ्जनः' इत्यमरः । त्वदीयानां तव इमाः त्वदीयाः । 'युष्मदस्मदोरन्यतरस्यां खञ्च' इति चाच्छः । 'प्रत्ययोत्तरपदयोश्चे'ति त्वादेशः ।

१ क्षतहृदाम् इति पाठः ।

तासां लीलाचलितलहरीणां लीलया चलिताः चञ्चलाः गच्छन्तो वा। 'चल गतौ' इत्यस्मात् 'गत्यर्थाकर्मक—' इत्यनेन कर्तरि क्तः। एतादृश्यो या लहर्यः तासां व्यतिकरात्संबन्धात् त्रिभुवनं जगत्त्रयं पुनीते पवित्रीकरोति। अहहेत्यद्भुते। 'अहहेत्यद्भुते खेदे' इत्यमरः। ननु देवोपि वायुः कथं चौर्यादिगुणयुक्त इत्याकाङ्क्षायामाह। स कः। यः पवमानः सुमनसां पुष्पाणाम्। 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः। अलभ्यमन्यत्र चौरैरप्राप्यम्। अनेन चौर्ये वायोः कौशल्यमावेदितम्। एतादृशं सौरभ्यं सौगन्ध्यं नियतं सततं यथा तथा हरति चोरयति। पुनः स कः। यः विरहशस्त्रक्षतभृतां विरह एव स्त्र्यादिवियोग एव शस्त्रं मारकत्वात्। यद्वा विरहश्च शस्त्रं च विरहशस्त्रे ताभ्यां यत् क्षतं तत् बिभ्रति ते विरहशस्त्रक्षतभृतः तेषाम्। क्वचित्तु विरहशस्त्रक्षतहृदामिति पाठः। तत्र विरहशस्त्राभ्यां क्षतं क्षतयुक्तं कृतं विदारितमिति यावत्। तादृशं हृत् येषामिति समासः। यद्वा विरहशस्त्रयोः क्षतं यस्मिन्निति व्यधिकरणपदो बहुव्रीहिः। तादृशं हृत् येषाम्। विरहशस्त्रक्षतयुक्तं हृत् येषामिति शाकपार्थिवादित्वान्मध्यमपदलोपी समासो वा। तेषां प्राणानपि असूनपि। 'पुंसि भूम्न्यसवः प्राणाः' इत्यमरः। क्षणादेव क्षणमात्रेणैव नियतं यथा स्यात्तथा हरति एतादृशः दुष्टो वायुः श्रेष्ठत्वल्लहरिसंबन्धमाहात्म्येन महत्कार्यं करोतीति भावः। उक्तं च हनुमन्नाटके—'ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरे वार्धौ वीर तरन्ति वानरभटान्संतारयन्तेऽपि च। नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः श्रीमद्दाशरथेः प्रतापमहिमा सोऽयं समुज्जृम्भते॥' इति।

लोकेऽपि दुष्टः प्रभुभृत्यत्वसंबन्धमाहात्म्येन महत्कार्यं करोतीति प्रसिद्धमेव ॥ ३५ ॥

इदानीं केचन लोकाः परकार्यसंपादकाः सन्ति, केचन पवित्रात्मानः सन्तः परलोकप्रणयिनो भवन्ति, अहं तु त्वयि स्थापितलोकद्वयभरः सन् सुखेन निद्रां करोमीत्याह—

कियन्तः सन्त्येके नियतमिह लोकार्थघटकाः
परे पूतात्मानः कति च परलोकप्रणयिनः।
सुखं शेते मातस्तव खलु कृपातः पुनरयं
जगन्नाथः शश्वत्त्वयि निहितलोकद्वयभरः ३६

कियन्त इति। भो मातः, कियन्तः कतिसंख्याकाः एके साधारणा लोकाः इह जगति नियतं लोकार्थघटकाः लोकानां जनानां अर्थाः प्रयोजनानि। 'अर्थरैविभवा अपि' इत्यमरः। तेषां घटकाः संयोजकाः सन्ति। यद्वा इह कियन्तः एके लोकार्थघटकाः सन्तः परलोकप्रणयिनः परलोकं प्रणयन्ति प्रार्थयन्ति ते। यद्वा परलोकं प्रकर्षेण नयन्ति गच्छन्ति ते परलोकप्रणयिनः सन्तीति योजना। इहलोके परकार्यसंपादन-जन्यपुण्येन स्वर्गलोकं गच्छन्ति। एवंच तेषामयं लोकः परलोकश्च समीचीन इत्याकूतम्। परे चान्ये च कति। यद्वा कति-परे च पूतात्मानः सन्तः पूतः तपःसेवनादिना पवित्रः आत्मा येषां ते एतादृशाः सन्तः नियतं परलोकप्रणयिनः सन्ति भो मातः, अयं जगन्नाथः। तु पुनःशब्दस्त्वर्थः। तव कृपातः। पञ्चम्यन्तात्तसिल्। दयाहेतोः शश्वन्निरन्तरं सुखं यथा स्यात्तथा शेते निद्रां करोति। शश्वदित्यनेन कदापि अन्यत्र

करोति । सुखमित्यनेन तत्रैव मम सुखं नान्यत्रेति सूचितम् । ननु एवंच लोकद्वये तव का गतिरिति चेत्तत्राह । कथंभूतोऽयम् । त्वयि निहितलोकद्वयभरः । त्वयि भवत्यां लोकद्वये इहलोके परलोके च भरः सर्वेभ्य उत्कृष्टता निहितः स्थापितः लोकद्वयभरो येन सः । भरः उदरपोषणं वा । 'डुभृञ् धारणपोषणयो'रित्यस्मादच्चीति दिक् ॥ ३६ ॥

इदानीं ननु रे पापनिवृत्तये मां स्तौषि तत्रादौ पापमेव किमर्थं करोषीति चेत्त्वया स्वपतिताश्लीलशवशकलसमुदायपरित्राणं यथा क्रियते तथा मयापि पापं क्रियते स्वस्वभावस्य सर्वैरपि दुष्परिहार्यत्वादित्याह—

भवत्या हि व्रात्याधमपतिततया[1] खण्डपरिषत्-

परित्राणस्नेहः श्लथयितुमशक्यः खलु यथा ।

ममाप्येवं प्रेमा दुरितनिवहेष्वम्ब जगति

स्वभावोऽयं सर्वैरपि खलु यतो दुष्परिहरः ३७

भवत्या हीति । भो अम्ब, व्रात्याधमपतिततया व्रात्याश्चाधमाश्च व्रात्याधमाः व्रात्याः संस्कारहीनाः अधमा नीचाः ते पतिताः यस्यां सा तया । आहिताग्न्यादित्वात्पतितशब्दस्य परनिपातः । यद्यपि पतेः 'सनितनिपति' इति वार्तिकेन वेट्कत्वात् निष्ठायां 'यस्य विभाषे'तीण्निषेधः प्राप्नोति तथा 'द्वितीया श्रितातीतपतिते'ति निपातनाद्भवति । एतादृश्या भवत्या त्वया खण्डपरिषत्परित्राणस्नेहः खण्डानामर्थात् स्वपतितशवशकलानां । 'भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः । परिषत्

१ पतितपाखण्डपरिषत् इति पाठः ।

समुदायः तस्याः परित्राणं पालनं तत्र स्नेहः प्रेम। 'प्रेमा ना प्रियता हार्दं प्रेम स्नेह' इत्यमरः। श्लथयितुं त्यक्तुं यथाऽशक्यः खलु निश्चयेन, एवं दुरितनिवहे दुरितस्य पापस्य निवहः समूहस्तत्र ममापि प्रेमा प्रियता। अस्तीति शेषः। यतो यस्मात्कारणात् जगति सर्वैरपि अयं स्वभावो निसर्गः। 'स्वरूपं च स्वभावश्च निसर्गश्चे'त्यमरः। दुष्परिहरः दुःखेनापि परिहर्तुमशक्यः। अस्तीति शेषः। दुःखशब्दे उपपदे हरतेः 'ईषद्दुःस्वि'ति सूत्रेण खल्। यद्वा दुरितनिवहे जगतीति योजना। व्रात्याधमपतितयेत्यनेन तेषामपि रक्षणे किं वक्तव्यं पुण्यवतामित्यावेदितम्। खण्डमित्यनेन अवयवस्य पालने किं वक्तव्यमवयविन इत्याशयः। परिषदित्यनेनैकमपि न त्यजत इति भावः। दुरितनिवहेत्यनेन बहुषु पातकेषु ममेच्छा नत्वेकस्मिन् द्वयोर्वेत्यावेदितम्। अत्र निन्दया स्तुत्यभिव्यक्तेर्व्याजस्तुत्यलंकारः। तदुक्तं कुवलयानन्दे 'उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयो'रिति। मम यथा, 'विवेकलेशोपि न ते रामचन्द्र रणे रिपून्। हतान् स्वनाशकान् शीघ्रं पापिनो नयसे दिव'मिति। अत्रारीन् दिवं नयसे इत्युक्त्या भक्तानवश्यं नयसे इति स्तुत्यभिव्यक्तिः॥३७॥

इदानीं गङ्गाताण्डवविधिं वर्णयन् स्वतापशमनं प्रार्थयते—

प्रदोषान्तर्नृत्यत्पुरमथनलीलोद्धृतजटा-
तटाभोगप्रेङ्खल्लहरिभुजसंतानविधुतिः।
बिलक्रीडत्क्रोडज्जलडमरुडंकारसुभग-
स्तिरोधत्तां तापं त्रिदशतटिनीताण्डवविधिः॥

प्रदोषेति। त्रिदशतटिनीताण्डवविधिः त्रिदशानां देवानां

तटिनी गङ्गा तस्याः ताण्डवम्। तण्डुना तच्छास्त्रप्रवर्तकाचार्येण प्रोक्तं ताण्डवं नाट्यम्। 'तेन प्रोक्त'मित्यणि 'ओर्गुणः' इति गुणः। 'ताण्डवं नटनं नाट्य'मित्यमरः। तस्य विधिः करणम् 'विधिर्विधाने दैवे चे'त्यमरः। तापं अर्थाद्भक्तजनसंतापम्। यद्वा पूर्वश्लोकान्ममेत्यनुवर्तते। तथाच मम तापं तिरोधत्तां अन्तर्धानं गमयतु। नाशयत्वित्यर्थः। ताण्डवसामग्रीमाह। कथंभूतस्त्रिदशतटिनीताण्डवविधिः। प्रदोषान्तर्नृत्यत्पुरमथनलीलोद्धृतजटातटाभोगप्रेङ्खल्लहरिभुजसंतानविधुतिः। प्रदोषस्य सूर्यास्तानन्तरं षट्घटिकात्मककालस्यान्तर्मध्ये नृत्यं कुर्वन् स चासौ पुरमथनश्च शिवश्च तेन लीलया उद्धृताः उत् ऊर्ध्वं धृताः इयं नृत्यचेष्टा एतादृश्यः याः जटाः संयताः केशाः। 'जटा स्यात्संयतालकाः' इति कोशः। तटे आभोगः पतनात्मकः संयोगसंबन्धः नृत्यत्पुरमथनलीलोद्धृतजटानां तटाभोगः तेन प्रेङ्खन्त्यः गच्छन्त्यः चञ्चला वा याः लहर्यः वीच्यः ता एव भुजाः संतानं च विधुतिश्च संतानविधुती संतानं दीर्घीकरणं विधुतिः कम्पः भुजानां संतानविधुती यस्मिन् स प्रदोषान्तः। इदं समस्तं व्यस्तं वा। उक्तप्रदोषलक्षणे प्रमाणं तु 'त्रिमुहूर्तं प्रदोषः स्याद्भानावस्तंगते सती'ति हेमाद्र्याद्युदाहृतं वचनं बोध्यमिति दिक्। संतानेत्यत्र संपूर्वक 'धूञ् कम्पने' इत्यस्मात् स्त्रियां क्तिन्। पुनः कथंभूतः। त्रिदशतटिनीताण्डवविधिः। बिलक्रोडक्रीडज्जलडमरुडंकारसुभगः बिलस्य विवरस्य क्रोडं अर्थात् मध्यः 'न ना क्रोडं भुजान्तर'मित्यमरः। तत्र क्रीडत् विहरत् यज्जलं तदेव डमरुर्वाद्यविशेषः। ढक्केत्यर्थः। 'वाद्य-

प्रभेदा डमरुमड्डुडिण्डिमझर्झराः' इत्यमरः । तस्य तेन वा यः टंकारः शब्दविशेषः तेन सुभगः शोभनं सुष्ठु वा भगं श्रीः यस्य सः । 'भगं श्रीकाममाहात्म्ये'त्यमरः । सुन्दर इत्यर्थः । क्वचित्तटङ्कोडेति पाठः ॥ ३८ ॥

इदानीं सर्वदा भवत्यां स्थापितकुशलचिन्ताभरं मां त्वं विषमे अस्मिन् समये यदि त्यजसि तर्हि अतः परं भुवनत्रये तव विश्वासं कोपि न कुर्यात् तव करुणा च निराधारा स्यादिति गङ्गायाः भयप्रदर्शनेनाह—

सदैव त्वय्येवार्पितकुशलचिन्ताभरमिमं
यदि त्वं मामम्ब त्यजसि समयेऽस्मिन्सुविषमे।
तदा विश्वासोऽयं त्रिभुवनतलादस्तमयते
निराधारा चेयं भवति खलु निर्व्याजकरुणा ॥

सदैवेति । भो अम्ब, सदैव सर्वदैव त्वय्येव भवत्यामेव । एवो देवतीर्थान्तरं व्यावर्तयति । अर्पितकुशलचिन्ताभरं कुशलस्य क्षेमस्य । 'कुशलं क्षेममस्त्रिया'मित्यमरः । तस्य चिन्ता कथं मम कुशलं भविष्यतीत्याकारिका तस्या भर आधिक्यम् । बही चिन्तेत्यर्थः । भरः समूहो वा । अर्पितः स्थापितः कुशलचिन्ताभरो येन सः तम् । गङ्गैव मम कुशलं करिष्यतीति मन्यमानमित्यर्थः । इमं त्वत्समीपे वर्तमानमेतादृशं मां सुविषमे सुतरामत्यन्तं विषमः दुःसहः तस्मिन् । अतिकठिन इत्यर्थः । यद्वा विषं गरलं मयते ददातीति विषमस्तस्मिन् 'मेङ् प्रणिदाने' इत्यस्य 'आदेच उपदेशेऽशिती'त्यात्वे 'आतोऽनुपसर्गे कः' इति

'आतो लोप इटि चे'त्याकारलोपः । एतादृशेऽस्मिन् समये यदि त्यजसि तदा तर्हि अयं विश्वासः गङ्गा शरणागतकुशलकर्त्रीत्याकारो निश्चयः त्रिभुवनतलात् त्रिभुवनस्य तलं तस्मात् अस्तं तिरोभावं अयते गच्छति गमिष्यतीति वा । 'वर्तमानसामीप्ये'इति भविष्यति लट् । च पुनः इयं निर्व्याजकरुणा अकपटकरुणा निराधारा भवति निर्गतः आधारो यस्याः सा एतादृशी भवति । खलु निश्चयेन । संदेहो नास्तीति भावः । विश्वासाभावेन कस्यापि तव निकटे आगमनाभावात् करुणायास्तिरोधानत्वात् । लोकेऽपि यस्य विश्वासो नास्ति तस्य निकटे कोपि नागच्छतीति प्रसिद्धमेव । एवंच माहात्म्यसंरक्षणाय झटिति ममोद्धारणं कुर्विति गङ्गाया भीतिप्रदर्शनमिति भावः । क्वचित्तु समये इत्यस्य स्थाने विषये इति पाठः । तत्र विषयोद्धारणरूपे विषये इत्यर्थः ॥ ३९ ॥

इदानीं हरवामभागे काऽद्वितीया कान्ता वर्तते इति प्रेक्षितुं कपर्दादुल्लस्य सीमन्तसरणौ आगता अतएव पार्वत्या सापत्न्यभावात् करेणाकर्षिता एतादृश्यस्तव लहर्यो विजयन्तामित्याह—

कपर्दादुल्लस्य प्रणयमिलदर्धाङ्गयुवतेः
पुरारेः प्रेङ्खन्त्यो मृदुलतरसीमन्तसरणौ ।
भवान्या सापत्न्यस्फुरितनयनं कोमलरुचा
करेणाक्षिप्तास्ते जननि विजयन्तां लहरयः ४०

कपर्दादिति । भो जननि, ते तव लहरयः कपर्दात् शिवजटाजूटात् उल्लस्य प्रसृत्य प्रणयमिलदर्धाङ्गयुवतेः । प्रणयेन

प्रीत्या मिलन्ती संयुज्यमाना अर्धाङ्गे वामभागे युवतिः पार्वती यस्य सः तस्य पुरारेः शिवस्य मृदुलतरसीमन्तसरणौ अतिशयेन मृदुलः कोमलः मृदुलतरः तादृशो यः सीमन्तः केशवेशः। 'सीमन्तः केशवेशे' इति शकन्ध्वादिगणसूत्रेण पररूपम्। तस्य सरणिः तत्र प्रेङ्खन्त्यः गच्छन्त्यः। उपरिष्टादधोभागे आगता इत्यर्थः। पुनः कथंभूताः। अतएव भवान्या पार्वत्या कर्तृभूतया कोमलरुचा कोमला रुक् कान्तिर्यस्य तेन। एतेन पार्वतीसौन्दर्यमुक्तम्। अतएव शिवेन प्रीतिवशात् लहरिकर्षणेन निवारिता एतादृशेन कारेण सापत्न्यस्फुरितनयनं यथास्यात्तथा समान पतिर्यस्याः सा सपत्नी तस्या भावः सापत्न्यं तेन स्फुरितेन कोपेन चञ्चले नयने यस्मिन्कर्मणि यथा भवति तथा आक्षिप्ताः आकर्षिताः। क्वचित्तु भवान्या इति षष्ठ्यन्तः पाठः। तत्र भवान्याः करेण कर्तृभूतेनेत्यर्थः॥ ४०॥

इदानीं बहवो लोकाः त्वामायान्ति तत्र तेषामभीष्टं करोषीति कारणं वर्तते। अहं तु स्वभावादेव त्वय्यनुरक्त इति तुभ्यं शप इत्याह—

प्रपद्यन्ते लोकाः कति न भवतीमत्रभवती-
मुपाधिस्तत्रायं स्फुरति यदभीष्टं वितरसि।
शपे तुभ्यं मातर्मम तु पुनरात्मा सुरधुनि
स्वभावादेव त्वय्यमितमनुरागं विधृतवान् ४१

प्रपद्यन्त इति। भो मातः सुरधुनि, कति लोकाः अत्रभवतीं पूज्यां भवतीं त्वां न प्रपद्यन्ते नायान्ति, अपितु बहवः

प्रपद्यन्त इत्यर्थः। तत्रायं उपाधिः कारणं स्फुरति वर्तते। किं तदित्याकाङ्क्षायामाह—यत् यस्मात् कारणात् अभीष्टं वाञ्छितं वितरसि ददासि। तेभ्य इति शेषः। मम तु पुनः जगन्नाथस्यात्मा स्वभावादेव निसर्गादेव त्वयि भवत्याममितं अपरिमितं अनुरागं प्रीतिं विधृतवान् धारयामास इति तुभ्यं भवत्यै शपे शपथं करोमि। 'श्लाघह्नुङ्स्थाशपा'मिति संप्रदानत्वम् ॥ ४१ ॥

इदानीं त्वदीया मृत्तिका मदीयं समस्तं शोकं दूरीकरोत्विति प्रार्थयते—

ललाटे या लोकैरिह खलु सलीलं तिलकिता
तमो हन्तुं धत्ते तरुणतरमार्तण्डतुलनाम्।
विलुम्पन्ती सद्यो विधिलिखितदुर्वर्णसरणिं
त्वदीया[1] सन्मृत्स्ना मम हरतु कृत्स्नामपि शुचम्

ललाट इति। पूर्वश्लोकात्संबोधनपदं आवर्तनीयम्। भो सुरधुनि, त्वदीया त्वत्संबन्धिनी सा मृत्स्ना प्रशस्ता मृत् मृत्स्ना 'सस्नौ प्रशंसाया'मिति मृत्शब्दात्स्नुप्रत्ययः। 'मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिके'त्यमरः। मम जगन्नाथकवेः कृत्स्नामपि संपूर्णामपि शुचं शोकं हरतु। ननु मृत्तिकायाः शोकहरणे कथं सामर्थ्यमित्याकाङ्क्षायामाह। सा का। या मृत्स्ना इहलोके ललाटे भालदेशे सलीलं यथास्यात्तथा तिलकिता सती पुण्ड्रीकृता सती तमो हन्तुं तरुणतरमार्तण्डतुलनां तरुणतरः माध्याह्निको यो मार्तण्डः सूर्यः तस्य तुलनां साम्यं धत्ते बिभर्ति। अत्र प्रमाणं तु—'गङ्गातीरसमुद्भूतां मृदं

१ सा मृत्स्ना इति पाठः।

मूर्ध्ना बिभर्ति यः । बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवल'मिति ब्रह्माण्डपुराणवचनं बोध्यम् । तिलककरणप्रकारोप्युक्तस्तत्रैव 'वामहस्ते जलं कृत्वा सावित्र्या चाभिमन्त्रितम् । तद्विष्णोरिति मन्त्रेण मर्दयेन्मृत्तिकां ततः । अतोदेवेति सूक्तेन तिलकं कारयेत्सदे'ति । इदं तिलककरणं प्रातःस्नानोत्तरं बोध्यम् । पुनः सा का । या विधिलिखितदुर्वर्णसरणिं विधिना ब्रह्मणा लिखिताः ते च ते दुर्वर्णाः दुष्टाक्षराणि अयं दरिद्रो भविता मृतभार्यश्चेत्यादयः तेषां सरणिः तां सद्यः लापनाव्यवहितोत्तरकाले एव विलुम्पन्ती विशेषेण लुम्पन्ती प्रोच्छन्ती । एवंच विधिलिखितमपि अलीकं कुर्वन्त्या मम शोकहरणे सामर्थ्यमस्तीति भावः ॥४२॥

इदानीं मूढान्नरानुपहसन्तः स्ववासिभ्रमराणां मालिन्यदोषं दूरीकुर्वाणाश्च गङ्गातीरतरवः मम सखायः सन्त्वित्याह—

नरान्मूढांस्तत्तज्जनपदसमासक्तमनसो
हसन्तः सोल्लासं विकचकुसुमव्रातमिषतः ।
पुनानाः सौरभ्यैः सततमलिनो नित्यमलिना-
न्सखायो नः सन्तु त्रिदशतटिनीतीरतरवः ४३

नरानिति । त्रिदशतटिनीतीरतरवः त्रिदशतटिन्याः गङ्गायाः तीरं तत्र तस्य वा तरवः वृक्षाः नः अस्माकं भक्तजनानां सखायः मित्राणि सन्तु भवन्तु । 'अथ मित्रं सखा सुहृदि'त्यमरः । कथंभूताः त्रिदशतटिनीतीरतरवः । मूढान्मूर्खान् अतएव तत्तज्जनपदसमासक्तमनसः ते च ते जनपदाश्च तत्तज्जनपदाः स्वस्वदेशाः । 'नीवृज्जनपदो देश'इत्यमरः । तेषु समासक्त

संबद्धं एतादृशं मनो येषां ते तान् एतादृशान् नरान्मनुष्यान् विकचकुसुमव्रातमिषतः विकचानि प्रफुल्लानि यानि कुसुमानि पुष्पाणि तेषां व्रातः समूहः तस्य तदेव वा मिषं छलं तस्मात् सोल्लासं सहर्षं यथास्यात्तथा हसन्तः उपहासं कुर्वन्तः एतेषां दुष्टस्वीयस्वीयदेशरचितभक्त्या तत्रैव मरणेन दुर्गतिर्भविष्यति अस्माकं तु सदैव गङ्गातीरवासित्वादुभयगतिर्भविष्यतीति तान् उपहसन्तीत्युत्प्रेक्षा । पुनः कथंभूताः । नित्यमलिनाः नित्यं मलिनाः मालिन्ययुक्ताः तान् । जन्मतः श्यामानित्यर्थः । एतादृशान् अलिनः भ्रमरान् सौरभ्यैः निजकुसुमसौगन्ध्यैः संततं निरन्तरं यथा स्यात्तथा पुनानाः पवित्रीकुर्वाणाः एवंच तादृशान् ये पुनन्ति ते स्वसखं मामपि पवित्रं करिष्यन्तीति भावः । सौरभ्यैः नित्यमलिनान् पुनाना इति वा योजना । 'मधुलिण्मधुपालिनः' इत्यमरः ॥ ४३ ॥

इदानीं केचन स्वेष्टफलावाप्तये यमनियमादियोगं कुर्वन्ति, अहं तु त्वन्नामस्मरणेन प्राप्तकामः सन् जगज्जालं तृणतुल्यं मन्य इत्याह—

यजन्त्येके देवान्कठिनतरसेवांस्तदपरे
वितानव्यासक्ता यमनियमरक्ताः कतिपये ।
अहं तु त्वन्नामस्मरणभृतकामस्त्रिपथगे
जगज्जालं जाने जननि तृणजालेन सदृशम् ॥

यजन्तीति । भो त्रिपथगे, एके लोकाः कठिनतरसेवान् अतिशयेन कठिना कठिनतरा सेवा येषां तान् एतादृशान्दे-

वान् विष्ण्वादीन् यजन्ति पूजयन्ति । तदपरे तेभ्यः देवपूजकेभ्यः अपरे अन्ये । पञ्चमीति योगविभागात्समासः । यद्वा ते देवपूजकाः अपरे येभ्यः ते इति पञ्चम्यर्थे बहुव्रीहिः । देवपूजकेभ्य उर्वरिता इत्यर्थः । वितानव्यासक्ताः उल्लोचेषु, यज्ञेषु वा व्यासक्ताः विशेषेण आसक्ताः । तत्परा इत्यर्थः । सन्तीति शेषः । 'अस्त्री वितानमुल्लोचः' इत्यमरः । लोके 'चांदवा' इति प्रसिद्धिः । 'क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके' इत्यमरः । कतिपयेऽन्ये लोकाः यमनियमरक्ताः यमनियमयो रक्ताः अनुरक्ताः । सन्तीति शेषः । तान्कुर्वन्तीत्यर्थः । तत्करणकाठिन्यात्कतिपयपदोपादानम् । यमनियमग्रहणमष्टानामप्युपलक्षणम् । ते च 'यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधयः' । तत्र अहिंसादिपरिग्रहो यमः । शौचादिसंपादनं नियमः । पद्मकाद्यासनम् । रेचकादिप्राणायामः । इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः । तत्रैव विच्छिद्य अन्तरिन्द्रियप्रवाहो ध्यानम् । चित्तवृत्तिनिरोधः समाधिरिति दिक् । भो त्रिपथगे जननि, त्रीन्पथो गच्छतीति त्रिपथगा, यद्वा त्रयाणां पथां समाहारस्त्रिपथम् । 'पथः संख्याव्ययादे'रिति नपुंसकत्वम् । तेन गच्छतीति त्रिपथगा । गमेर्डः । तत्संबोधनम् । अहं तु जगन्नाथस्तु त्वन्नामस्मरणभृतकामः सन् तव नाम त्वन्नाम । 'प्रत्ययोत्तरपदयोश्चे'ति त्वादेशः । त्वन्नामस्मरणं चिन्तनं तेन भृताः संपादिताः तादृशाः कामाः मनोरथाः येन सः एतादृशः सन् जगज्जालं जगतः जालं समूहः जगज्जालम् । 'जालं समूह आनायः' इत्यमरः । तृणजालेन कक्षसंघेन सदृशं तुल्यं जाने

वेद्मि । तृणजालेनेति 'तुल्यार्थै'रित्यादिना तृतीया । कलौ नामोच्चारणस्यैव सारत्वात्तदेव करोमीति भावः । तदुक्तम् 'हरेर्नामैव नामैव नामैव मम जीवनम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथे'ति दिक् । अत्र नामशब्दो नामोच्चारणपरो बोद्धव्यः ॥ ४४ ॥

इदानीं जन्मावधि निरन्तरं पुण्यवतां साधूनां श्रेयः कर्तुं बहवो देवाः कुशलाः सन्ति, निराश्रयाणां पापिनां तु त्वां विनान्यं हितकरं जगति न पश्यामीत्याह—

अविश्रान्तं जन्मावधि सुकृतजन्मार्जनकृतां
सतां श्रेयः कर्तुं कति न कृतिनः सन्ति विबुधाः ।
निरस्तालम्बानामकृतसुकृतानां तु भवतीं
विनामुष्मिँल्लोके न परमवलोके हितकरम् ४५

अविश्रान्तमिति । भो त्रिपथगे जननि, अविश्रान्तं निरन्तरं जन्मावधि जन्मप्रभृति जन्मपर्यन्तं वा सुकृतजन्मार्जनकृतां सुकृतेन पुण्येन जन्मार्जनं जन्मसंग्रहस्तत् कुर्वन्ति तेषां तादृशानां सतां साधूनां श्रेयः कर्तुं कल्याणं संपादयितुं कति कतिसंख्याका विबुधाः देवाः कृतिनः कुशलाः न सन्ति । अपितु बहवः सन्तीत्यर्थः । निरस्तालम्बानां निरस्तः गतः आलम्बः आश्रयो येषां तेषां अकृतसुकृतानां तु न कृतं सुकृतं पुण्यं यैः तेषाम् । पापिनामित्यर्थः । तेषां तु अमुष्मिन् लोके भवतीं विना त्वामृते परं द्वितीयं हितकरं अभिमतसंपादकं नावलोके न पश्यामि । एतत्सर्वं चित्ते निधाय त्वामहं शरणं गत इति भावः ॥ ४५ ॥

इदानीं तव जलं पीत्वा मूढमित्रैः सह विहर्तुं गतोऽहं क्वचिदपि सुखं न लब्धवान्, इदानीं मृदुपवनसंबन्धशीतलस्वाङ्के चिरकालमनिद्रं मां त्वं स्वापयेति प्रार्थयते—

पयः पीत्वा मातस्तव सपदि यातः सहचरै-
र्विमूढैः संरन्तुं क्वचिदपि न विश्रान्तिमगमम् ।
इदानीमुत्सङ्गे मृदुपवनसंचारशिशिरे
चिरादुन्निद्रं मां सदयहृदये शायय चिरम् ४६

पय इति । भो मातः, तव पयः पीत्वा विमूढैः मूर्खाः विमूढाः तैः । विशेषतश्च ईषदपि हिताहितज्ञानशून्यत्वम् । तादृशैः सहचरैः सह साकं चरन्ति भक्षन्ति, गच्छन्ति वा ते सहचराः मित्राणि तैः सह सपदि शीघ्रं संरन्तुं विहर्तुं यातः गतः । 'गत्यर्थाकर्मके'त्यादिना याधातोः कर्तरि क्तः । एतादृशः अहं क्वचिदपि कस्मिंश्चित् स्थलेऽपि कस्मिंश्चित् विहारेऽपि वा विश्रान्ति विश्रामं न अगमम् । सपदि यात इति वा योजना । यद्वा तव पयः यदि पीत्वेति संबन्धः । एतेन तृष्णावशात् शीघ्रं तव जलपानमात्रं कृतं न स्नानादिकम् । तेन स्वस्मिन्नपराधबाहुल्यमस्तीति सूचितम् । भो सदयहृदये दयया सहितं सदयं तादृशं हृदयं यस्याः सा तत्संबोधनम् । एतादृशि हे मातः, इदानीं संप्रति 'एतर्हि संप्रतीदानीमधुना सांप्रतं तथे'त्यमरः । मृदुपवनसंचारशिशिरे मृदुः कोमलः । अल्प इत्यर्थः । एतेन वात्यायाः दुःखप्रदत्वान्निरासः सूचितः । मृदुश्चासौ पवनश्च तस्य संचारः गमनं संबन्धो वा तेन शिशिरः शीतलः ।

एतेन श्रमसंत्रस्तस्य निद्रास्थानयोग्यत्वमावेदितम् । एतादृशे उत्सङ्गे अङ्के चिरात् बहुकालं उन्निद्रं उद्गता निद्रा यस्य सः एतादृशं मां शायय स्वापय । निद्रां कारयेत्यर्थः । 'शीङ् स्वप्ने' इति धातोर्णिजन्तात् लोण्मध्यमपुरुषैकवचनम् । सिप् 'अतो हेः' इति हेर्लुक् । निद्रायाः सुखविशेषरूपफलस्य प्रयोज्यगामित्वात् प्रयोजकरूपकर्तृगामित्वाभावेन 'णिचश्चे'ति आत्मनेपदं न । चिरात् शाययेति वा योजना । लोकेऽपि माता पुत्रं अङ्के स्वापयतीति प्रसिद्धमेव । एतदर्थमेव मातरिति संबोधनम् ॥ ४६ ॥

इदानीं ममोद्धाराय कटिबन्धादिकं कुर्वित्याह—

बधान द्रागेव द्रढिमरमणीयं परिकरं
किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः ।
न कुर्यास्त्वं हेलामितरजनसाधारणतया
जगन्नाथस्यायं सुरधुनि समुद्धारसमयः ॥४७॥

बधानेति । भो सुरधुनि, जगन्नाथस्य एतन्नाम्नः अयं समुद्धारसमयः । सम्यगुद्धरणं समुद्धारः तस्य समयः कालः । अस्तीति शेषः । यद्यपि 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयो'रिति निषेधात् स्वनामग्रहणं अश्रेयस्करं भवति तथापि अत्यन्तातुरतया निषेधोल्लङ्घनम् । अतएव 'हा पितः क्वासि हे सुभ्रु बह्वेव विललाप सः' इति भट्टिप्रयोगः संगच्छत इति दिक् । ननु अस्तु तवोद्धारसमयः मया किं कर्तव्यमित्याकाङ्क्षायामाह—बधानेति । त्वं द्रढिमरमणीयं अतिशयेन दृढः इति द्रढिमा । 'वर्णदृढादिभ्यः ष्यञ्चे'ति चादिमनिच् । 'र ऋतो हलादेर्लघो'रिति

ऋकारस्य रकारः। द्रढिमा चासौ रमणीयश्च तम्। अतिशयेन सुन्दरं चेत्यर्थः। एतादृशं परिकरं कटिं द्राक् शीघ्रं बधान। 'बध बन्धने'। 'भवेत्परिकरो व्राते पर्यङ्कपरिवारयोः। प्रगाढगात्रैकबन्धे विवेकारम्भयोरपी'ति विश्वः। ममोद्धाराय शीघ्रं कटिबन्धं कुर्विति भावः। पुनस्त्वं किरीटे मुकुटे। '–अथ मुकुटं किरीटं पुंनपुंसक'मित्यमरः। बालेन्दुं बालश्चासौ इन्दुश्च तं कलात्मकं चन्द्रं पन्नगगणैः पन्नं पतितं गच्छन्ति ते पन्नगाः सर्पाः तेषां गणाः समूहाः तैः नियमय नियमनं कुरु। तत्रैव स्थापयेत्यर्थः। अन्यथा ममागमनसमये पतिष्यतीति भावः। लोकेऽपि कश्चन मनुष्यः कस्यचिद्व्याघ्रादिपीडितस्य यदा मोचनं करोति तदा कटिबन्धशिरोभूषणादिकं दृढं करोतीति प्रसिद्धम्। यद्वा किरीटे पन्नगगणैः बालेन्दुं नियमयेति योजना। पुनः त्वं इतरजनसाधारणतया इतरः अन्यः नीचो वा। 'इतरस्त्वन्यनीचयो'रित्यमरः। स चासौ लोकश्च जनश्च तेन साधारणः तुल्यः तस्य भावः साधारणता तया हेलां अर्थात् मम अनादरं न कुर्याः। मा कुर्वित्यर्थः। परमत्वद्भक्ते मयि अन्यजनतुल्योयमिति बुद्धिं मा कुर्विति भावः। अत्र लोकोक्त्यलंकारः। तदुक्तं कुवलयानन्दे 'लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते' इति ४७

इदानीं गङ्गारूपं स्तौति—

शरच्चन्द्रश्वेतां शशिशकलश्वेतालमुकुटां
करैः कुम्भाम्भोजे वरभयनिरासौ च दधतीम्।
सुधाधाराकाराभरणवसनां शुभ्रमकर-
स्थितां त्वां ये ध्यायन्त्युदयति न तेषां परिभवः

शरदिति । भो सुरधुनि, ये जनाः त्वां ध्यायन्ति चिन्तयन्ति तेषां जनानां परिभवः अनादरः । 'अनादरः परिभवः परीभावस्तिरस्क्रिये'त्यमरः । न उदयति उत्पन्नो न भवतीत्यर्थः । यद्यपि 'अय गता'विति धातोरात्मनेपदं तथापि 'इटकिटकटी'त्यत्र प्रश्लिष्टस्य ईधातोरुत्पूर्वस्येदं रूपं बोध्यम् । अतएव 'उदयति विततोर्ध्वरश्मिरज्जा'विति माघप्रयोगः संगच्छत इति दिक् । कथंभूतां त्वाम् । शरच्चन्द्रश्वेताम् शरदि शरत्काले । 'अथ शरत् स्त्रिया'मित्यमरः । तत्र यश्चन्द्रः तद्वत् श्वेतां शुभ्राम् । परमगौरामित्यर्थः । शरदित्यनेन परमनैर्मल्यं सूचितम् । पुनः कथंभूताम् । शशिशकलश्वेतालमुकुटाम् । अलति दंशं कुर्वन् गच्छतीत्यलः सर्पः श्वेतश्चासौ अलश्च श्वेतालः शुभ्रसर्पः शशिनश्चन्द्रस्य शकलः खण्डः शशिशकलः शशिशकलश्च श्वेतालश्च शशिशकलश्वेतालौ तौ मुकुटे यस्याः सा ताम् । यद्वा श्वेताश्च ते अलाश्च भूषणानि च श्वेतालाः । यद्वा श्वेतस्य रजतस्य अलाः भूषणानि 'दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपी'त्यमरः । गमनभूषणार्थकादलधातोः पचाद्यच् । शेषसमासः पूर्ववत् । यद्वा शशिशकलश्वेतालः तादृशो मुकुटो यस्याः सा ताम् । यद्वा शशिशकलं श्वेताल इव शुभ्रभूषणमिवेति व्याघ्रादित्वादुपमितसमासः । शशिशकलश्वेतालः तादृशो मुकुटो यस्याः सा ताम् । यद्वा शशिशकलश्वेतः श्वेतगुणः तं आसमन्तात् लातीति शशिशकलश्वेतालः तादृशो मुकुटो यस्याः सा ताम् । यन्मुकुटे चन्द्रस्य प्रभा प्रसृता भवतीति भावः । 'ला दाने' इति धातोः 'आतश्चोपसर्गे' इति कः । 'गुणे शुक्लादयः पुंसी'त्यमरः । यद्वा शशिशकलं च श्वेतश्च शशिशक-

लश्वेतौ । श्वेतो रजतं तौ आसमन्ताल्लातीति शशिशकलश्वेतालः । तादृशो मुकुटो यस्याः सा ताम् । यस्याः रौप्यमुकुटे शशिशकलं वर्तत इत्यर्थः । अन्यत् विस्तारभयान्न लिख्यते । पुनः कथंभूता । करैः चतुर्भिः हस्तैः कुम्भाम्भोजे कुम्भश्च अम्भोजं च कुम्भाम्भोजे कुम्भो घटः अम्भोजं कमलं ते वरभयनिरासौ च भयस्य निरासः नाशः । अभयमित्यर्थः । वरश्च भयनिरासश्च वरभयनिरासौ तौ च दधती बिभ्रती । चतुर्भिर्हस्तैरिमानि चत्वारि दधतीति भावः । पुनः कथंभूतां त्वाम् । सुधाधाराकाराभरणवसनाम् । सुधायाः अमृतस्य धारास्तदाकाराणि आभरणानि वसनं च आभरणानि भूषणानि, वसनं वस्त्रम् । 'अलंकारस्त्वाभरणं परिष्कारो विभूषणम्' । 'वस्त्रमाच्छादनं वासश्चैलं वसनमंशुक'मित्यमरः । सुधाधारावत् आकारो रूपं येषां तानि सुधाधाराकाराणि तादृशानि आभरणवसनानि यस्याः सा ताम् । अतिशुभ्राभरणवसनामित्यर्थः । पुनः कथंभूतां त्वाम् । शुभ्रमकरस्थितां शुभ्रश्चासौ मकरश्च शुभ्रमकरः मकरो मत्स्यः तत्र स्थिता ताम् । शुभ्रमत्स्यवाहिनीमित्यर्थः ॥ ४८ ॥

इदानीं गङ्गा मम शरीरसुखं करोत्वित्याह—

दरस्मितसमुल्लसद्वदनकान्तिपूरामृतै-
र्भवज्वलनभर्जिताननिशमूर्जयन्ती नरान् ।
चिदेकमयचन्द्रिकाचयचमत्कृतिं तन्वती
तनोतु मम शं तनोः सपदि शन्तनोरङ्गना ४९

दरस्मितेति । शंतनोः भीष्मपितुः अङ्गना कल्याणानि

अङ्गनानि यस्याः सा अङ्गना । 'अङ्गात्कल्याणे' इति पामाद्यन्तर्गणसूत्रेण अङ्गशब्दान्नप्रत्ययः । श्रीगङ्गा मम जगन्नाथपण्डितस्य तनोः शरीरस्य । 'ङिति ह्रस्वश्चे'ति वैकल्पिकत्वात् घिसंज्ञायां गुणः । शं सुखं सपदि शीघ्रं तनोतु विस्तारयतु । प्रार्थनायां लोट् । कथंभूता अङ्गना । दरस्मितसमुल्लसद्वदनकान्तिपूरामृतैः दरं ईषत् तच्च तत् स्मितं च दरस्मितं तेन समुल्लसत् विकासमानं तच्च तद्वदनं च तस्य कान्तिः छविः तस्याः पूरा आधिक्यानि त एवामृतानि तैः भवज्वलनभर्जितान् भव एव संसार एव ज्वलनः अग्निः तेन तत्र वा भर्जिता दग्धास्तान् । एतादृशान् नरान् मनुष्यान् अनिशं सर्वदा ऊर्जयन्ती जीवयन्ती । यद्वा भवस्य महादेवस्य ज्वलनः तृतीयनेत्राग्निः तेन तत्र वा भर्जितान् एवंच तादृशकृत्यं कुर्वन्त्या मम वपुःसुखकरणे न कोप्यायास इति भावः । पुनः कथंभूता अङ्गना । चिदेकमयचन्द्रिकाचयचमत्कृतिम् चिदेकमयी चित्स्वरूपा सा चासौ चन्द्रिका कौमुदी च ।'चन्द्रिका कौमुदी ज्योत्स्ना'इत्यमरः । तस्याः चयः समूहः तस्य चमत्कृतिः चमत्कारः तां तन्वती तनोतीति तन्वती विस्तारयन्ती । तनोतेः शता । अनेकचन्द्रप्रकाशं स्वयमेव करोतीति भावः । अस्मिन् श्लोके पृथ्वीछन्दः । 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरु'रिति लक्षणात् ॥ ४९ ॥

इदानीं संसारज्वालानिर्दग्धवपुषो मम तापं शमयेत्याह—

मन्त्रैर्मीलितमौषधैर्विगलितं त्रस्तं सुराणां गणैः
स्रस्तं सान्द्रसुधारसैर्विदलितं गारुत्मतैर्ग्रावभिः ।

वीचिक्षालितकालियाहितपदे स्वर्लोककल्लोलिनि
त्वं तापं तिरया[1]धुना मम भ[2]वज्वालावलीढात्मनः

मन्त्रैरिति । वीचिक्षालितकालियाहितपदे कालियस्याहितः शत्रुः कालियाहितः विष्णुः तस्य पदं चरणः वीच्या क्षालितं प्रक्षालितं वीचिक्षालितं कालियाहितपदं यया सा तत्संबोधनम् । यद्वा कालियः अहितः शत्रुर्यस्य स कालियाहितो विष्णुः शेषं पूर्ववत् । यद्वा कालिये आहितं अर्थात् विष्णुना स्थापितं तच्च तत्पदं च शेषं प्राग्वत् । हे स्वर्लोककल्लोलिनि स्वर्लोकस्य सुरलोकस्य कल्लोलिनी नदी तत्संबोधनम् । त्वं अधुना भवज्वालावलीढात्मनः भवस्य ज्वालाः ताभिः अवलीढः कवलितः । व्याप्त इत्यर्थः । तादृशः आत्मा यस्य तस्य मम तापं निरय निवारय । तिरयेति पाठः । तत्र तिरःकुरु । तिरशब्दात् णिजन्ताल्लोट् । अव्ययानां भमात्रे टिलोपः इति तिरसष्टेर्लोपः । क्वचित्तु भवव्यालावलीढात्मन इति पाठः । तत्र भव एव व्यालः सर्पः तेनावलीढः तादृश आत्मा यस्य स तस्येति व्याख्येयम् । ननु तादृशतापनिवारणे मन्त्रादयो बहवः सन्तीति चेत्तेपि न शक्ता इत्याह—मन्त्रैरित्यादि मन्त्रैर्मीलितं साहसेन तापनिवारणाभावात् संकुचितमित्यर्थः । अयं हेतुः सर्वत्र पूर्वार्धे योज्यः । बहुवचनं तु एकोपि न समर्थ इति बोधनाय । एवमग्रेपि बोध्यम् । यद्वा यत्र बहुभिः संकुचितं तत्र एकस्य का वार्तेत्यर्थबोधनाय । औषधैस्तापनिवारणाय योग्यैर्वैद्यशास्त्रप्रसिद्धैर्मुकुलितं मुकुलीभावमापन्नं । सुराणां देवानां गणैः संघैः त्रस्तं त्रासं गतं । सान्द्र-

१ अयमेव पाठः साधुः । २ भवव्यालावलीढात्मन इति पाठः ।

सुधारसैः सान्द्राः निविडाः ते च ते सुधारसाश्च तैः अमृतजलैः । 'रसो जलं रसो हर्ष' इत्यनेकार्थकोशः । स्रस्तं अधःपतितम् । 'स्रंसु अधःपतने' पदत्वाभावात् 'वसुस्रंस्वि'ति दत्वं न । गारुत्मतैः गरुत्मान् गरुडः 'गरुत्मान् गरुडस्तार्क्ष्य'इत्यमरः । देवता येषां ते गारुत्मताः तैः 'सास्य देवते'त्यण् । यद्वा गरुत्मतः इमे गारुत्मताः तैः 'तस्येद'मित्यण् । एतादृशैः ग्रावभिः पाषाणैः । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषदि'त्यमरः । विदलितं विशेषेण दलितं स्फुटितम् । विशेषश्च खण्डखण्डभवनम् । अत्र सर्वत्र पूर्वार्धे नपुंसके भावे क्तः । अतएव कर्तुरनभिहितत्वान्मन्त्रैरित्यादिषु कर्तरि तृतीया । अत्र श्लोके शार्दूलविक्रीडितं छन्दः । 'शार्दूलविक्रीडितं म्सौज्सौतौगादित्यऋषयः' इति लक्षणात् ॥ ५० ॥

इदानीं गङ्गालहरीनटघटीताण्डवमस्मान्पुनात्विति प्रार्थयते—

द्यूते नागेन्द्रकृत्तिप्रमथगणमणिश्रेणि[1]नन्दी-
न्दुमुख्यं सर्वस्वं हारयित्वा स्वमथ पुरभिदि
द्राक्पणीकर्तुकामे । साकूतं हैमवत्या मृदु-
लहसितया वीक्षितायास्तवाम्ब [2]व्यालोलो-
ल्लासिवल्गल्लहरिनटघटीताण्डवं नः पुनातु ५१

द्यूत इति । भो स्वर्लोककल्लोलिनि, तव भवत्याः व्यालोलोल्लासि वल्गल्लहरिनटघटीताण्डवम् । व्यालोलाश्चञ्चलाः

१ फणिश्रेणि इति पाठः । २ प्रोल्लोलोल्लासिलीलालहरिनवघटाताण्डवं नः पुनीतां इति पाठः ।

उल्लासिन्यः ऊर्ध्वं उच्छलन्त्यः वल्गन्त्यः गच्छन्त्यः एतादृश्यो या लहर्यः ता एव नटस्तस्य घटीताण्डवं शिरसि घटीं धृत्वा नर्तनम् । यद्वा नटस्य घटीताण्डवं नटघटीताण्डवम् व्यालोलोल्लासिवल्गल्लहरीणां नटघटीताण्डवं तत् नः अस्मान् भक्तजनान्पुनातु पवित्रीकरोतु । व्यालोलादिविशेषणविशिष्टलहरीभवने मूलमाह । कथंभूतायास्तव । द्यूते दुरोदरे परस्य जिगीषयाक्षैः क्रीडनं द्यूतं तत्र । अत्र विनिगीषायाः सत्त्वात् 'दिवो विजिगीषाया' मित्यनेन निष्ठातस्य णत्वं न । नागेन्द्रकृत्तिप्रमथगणमणिश्रेणिनन्दीन्दुमुख्यम् । नागेन्द्रो वासुकिः कृत्तिर्गजादिचर्म, प्रमथगणः तन्नामकः पारिषदः, मणिश्रेणिः मणीनां रुद्राक्षादिमणीनां श्रेणिः पङ्क्तिः, नन्दिः स्ववाहनभूतो वृषभः, इन्दुः स्वशिरोभूषणभूतश्चन्द्रः, एतेषां इतरेतरयोगद्वन्द्वः । नागेन्द्रकृत्तिप्रमथगणमणिश्रेणिनन्दीन्दवः मुख्याः श्रेष्ठाः यस्मिन् तत् एतादृशं सर्वस्वं सर्वं च तत् स्वं च सर्वस्वं धनं हारयित्वा शिवसकाशात्पार्वतीं गृहीत्वा । हारयित्वेत्यत्र णिजन्तात्क्त्वा । अत्र प्रयोजककर्तृत्वं पार्वत्याः, प्रयोज्यकर्तृत्वं शिवस्य । अतएव 'समानकर्तृकयोः पूर्वकाले' इत्यनेन क्त्वासुलभः । वीक्षणकर्तृकर्तृत्वाहरणमिति बोधः । प्रकृतमनुसरामः । अथ सर्वस्वहरणानन्तरं पुरभिदि पुरनामानं दैत्यं भिनत्ति विदारयतीति पुरभित् तस्मिन् शिवे स्वमात्मानं पणीकर्तुकामे सति पणनं व्यवहरणं पणः 'घञर्थे कविधान'मिति कः । अपणः पणः यथा संपद्यते तथा कर्तुमिति पणीकर्तुं कामः इच्छा यस्य सः तस्मिन् । 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि । समो वाहिततयोर्मांसस्य पचि

युट्घञो'रिति पृषोदरादिगणपठितवचनेन कर्तुमिति मकारलोपः । तादृशे सति मृदुलं हसितं हास्यं यस्याः सा तया । इदानीं सपत्नीभूतगङ्गायाचनेन श्रेष्ठसिद्धिर्भविष्यतीत्याशयेन हसिता एतादृश्या हैमवत्या हिमवतो हिमाचलस्यापत्यं स्त्री हैमवती । 'तस्यापत्य'मित्यण् 'टिड्ढाणञि'ति ङीप् । तया पार्वत्या साकूतं आकूतेनाभिप्रायेण सहितं साकूतं तद्यथा स्यात्तथा वीक्षितायाः विशेषेणेक्षिता वीक्षिता तस्याः । विशेषश्च जटाजूटस्थित्या द्रष्टुमशक्याया अपि यत्नतो दर्शनव्यापारवत्त्वम् । यद्यपि शिवस्य पूर्वोक्तं सर्वस्वं मया हृतम् अतएव शिवः आत्मानं पणीकरोति तथापि गङ्गा उर्वरिता वर्तते । सा च सपत्नीभूतत्वान्मामवमत्य एतावत्कालपर्यन्तं शिवशिरसि स्थिता वर्तते । इदानीं याचयित्वा दासी संपादनीयेति साकूतमित्यस्यार्थ इति दिक् । नर्तनप्रियस्य शिवस्य द्यूतं विस्मारयितुं गङ्गया नृत्यमारब्धमिति दिक् । हैमवतीत्यनेन कठिनहृदयत्वात्तेन सर्वस्वहरणयोग्यत्वम् । अस्मिन् श्लोके स्रग्धरा वृत्तम् । 'स्रग्धरा म्रौभ्नौयौयुत्रिःसप्तकाः' इति लक्षणात् ॥ ५१ ॥

इदानीं चरमश्लोकेन स्वाङ्गानाममलीकरणं प्रार्थयते—

विभूषितानङ्गरिपूत्तमाङ्गा
सद्यः कृतानेकजनार्तिभङ्गा ।
मनोहरोत्तुङ्गचलत्तरङ्गा
गङ्गा ममाङ्गान्यमलीकरोतु ॥ ५२ ॥

विभूषितेति । गङ्गा भागीरथी । गङ्गाशब्दार्थस्तु 'स्मृतं

सद्य' इत्यष्टमश्लोके उक्तः । मम जगन्नाथस्याङ्गान्यमलीकरोत्वित्यर्थः । कथंभूता गङ्गा । विभूषितानङ्गरिपूत्तमाङ्गा । अनङ्गस्य कामस्य रिपुर्वैरी शिवः तस्योत्तमाङ्गं मस्तकं विभूषितं स्वस्थित्या शोभायुक्तं कृतं अनङ्गरिपूत्तमाङ्गं यया सा । पुनः कथंभूता । सद्यः तत्कालमेव कृतानेकजनार्तिभङ्गा । अनेके च ते जनाश्च तेषामार्तिः पीडा तस्याः भङ्गः नाशः कृतः संपादितः अनेकजनार्तिभङ्गो यया सा । यद्वा जनानां आर्तयः पीडाः अनेकाश्च ता जनार्तयश्च तासां भङ्गः अनेकजनार्तिभङ्गो यया सा । सद्यः कृतानेकजनार्तिभङ्गेत्येकं पदं वा । पुनः कथंभूता । मनोहरोत्तुङ्गचलत्तरङ्गा । मनोहरा अतिरमणीयाः उत्तुङ्गाः उन्नताः चलन्तः चञ्चलाः तरङ्गाः यस्याः सा । अस्मिन्पद्ये उपजातिनामकं वृत्तम् । 'इन्द्रवज्रा तौज्गौग्' 'उपेन्द्रवज्रा ज्तौज्गौग्' 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति लक्षणात् ॥ ५२ ॥

स्वकाव्यपठनस्य फलमाह—

इमां पीयूषलहरीं जगन्नाथेन निर्मिताम् ।
यः पठेत्तस्य सर्वत्र जायन्ते सुखसंपदः ॥५३॥

इमामिति । पीयूषस्यामृतस्य लहरीं त्वां यथा पीतामृतलहर्या आनन्दजनकत्वं तथा अस्या अपीति शेषः । अन्यकृतिभ्रमवारणायाह—जगन्नाथेन निर्मितामिति । निर्मितां कृताम् । शेषं सुगमम् ॥ ५३ ॥

यद्यप्यहं मन्दमतिस्तथापि टीकासमाप्तिर्हि बभूव शीघ्रम् ।
नात्रापरं कारणमस्ति किंचिच्छ्रीभास्कराज्ञा किल किंत्वमोघा १
शाके कीलकसंज्ञके नृसुखके संमासके चैत्रके
वारे भार्गवके तिथौ करणके सर्पस्य संबालके ।
मूले भे विबुधौघचित्तसुखदा टीका समाप्तानया
तोषं यातु समस्तपापहरिणी गङ्गा महेशाङ्गना ॥ २ ॥
नृपं द्विपं वा तुरगं मृगं वा शुकं बकं वा महिषं वृषं वा ।
हरीकरोष्यङ्गनकं हि गङ्गे स्नातं भवत्यां सकृदीशसङ्गे ॥३॥
नारायणो यस्य पितामहोऽभून्मणीकभट्टश्च पिता तदीयः ।
गोपी यदीया जननी सुशीला टीका कृता तेन सदाशिवेन ४
भक्तोपोद्गमहेतोः केदारत्वं स्थितोऽसि भूभृति किम् ।
तत्राप्यागत्य त्वां स्वशिवं याचे हि तत् सर्वम् ॥ ५ ॥

इति श्रीसदाशिवकृता पीयूषलहर्याख्या गङ्गालहरी-
टीका समाप्ता ।

---



PUBLISHER:—Pandurang Jawaji, } at the 'Nirnaya-sagar' Press,
PRINTER:—Ramchandra Yesu Shedge, } 26-28, Kolbhat Lane, Bombay.